2·5

# संस्कृत-विमर्शः

[प्रथम-द्वितियो-भागौ १९९०]

प्रधान सम्पादक
श्री प्रियदर्शी ठक्कुरः
निदेशकः

सम्पादकः
डा०-मधुसूदन-मिश्रः
उपनिदेशकः



राष्ट्रिय संस्कृत संस्थानम्

# संस्कृत-विमर्शः

(राष्ट्रिय संस्कृत संस्थानस्य षाण्मासिकी शोध पत्रिका)

अष्टादशः खण्डः | १९९० | प्रथम-द्वितीयौ-भागौ

प्रधान सम्पादक

**श्री प्रियदर्शी ठक्कुरः**

निदेशकः

सम्पादकः

**डा०-मधुसूदन-मिश्रः**

उपनिदेशकः




**राष्ट्रियसंस्कृतसंस्थानम्**

ए-40, विशाल एन्क्लेव राजा गार्डन

नई दिल्ली-110027

## विषयानुक्रमणिका

# अनुमानस्वरूपं तत्प्रामाण्यञ्च

पीयूष कान्तो दीक्षितः

भारतीयदर्शनेषु चार्वाकमतिरिच्य[1] सर्वे दार्शनिकाः प्रत्यक्षमिवानुमानमपि स्वतन्त्रं प्रमाणमिति मन्वते । "प्रत्यक्षानुमानोपमानशब्दाः[2] प्रमाणानी"ति गौतमोक्त्यनुसारमान्वीक्षिक्यामभ्युपगतेषु चतुर्षु प्रमाणेष्वन्यतमं प्रमाणमनुमानमिति सुस्पष्टम् । अत एव नव्य-न्यायप्रजापतिस्तत्रभवान् गङ्गेशोपाध्यायः लक्षणस्वरूपप्रामाण्यादिभिः[3] अनुमानचिन्तामणावनुमानं ज्ञापयितुं प्रवृत्तः "तत्करणमनुमानं तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति वक्ष्यते"[4] इत्यादि प्रतिपादयति । इतरभेदज्ञापको धर्मः लक्षणं, लक्ष्यतावच्छेदकीभूतो धर्मश्च स्वरूपमिति शास्त्रकर्तॄणां सङ्केतः[5] । प्रकृतेऽनुमानस्येतरभेदज्ञापकं रूपमनुमितिकरणत्वमेवेति सर्वसम्मतपक्षमुपरितनग्रन्थेन स्पष्टयन् गङ्गेशस्तस्य स्वरूपमधिकृत्य पूर्वोत्तरपक्षावपि स्फुटयति—'तच्च लिङ्ग परामर्शो न तु परामृश्यमानं लिङ्ग-

---

१. देहातिरिक्त आत्मनि प्रमाणाभावात् प्रत्यक्षैकप्रमाणवादितयानुमानादेरनङ्गीकारेण प्रामाण्याभावात् । सर्व० सं०, पृ० ३

२. न्यायसूत्र १।१।३, पृ० १८५

३. तत्रलक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये करणस्य क्रियाभेदभिन्नमूर्तिकतया क्रियालक्षणपूर्वकं तल्लक्षणमाह व्याप्तीत्यादिना । चि० दी० २, पृ० २४

४. चि० २, पृ० २४

५. लक्षणेति । लक्षणमितरभेदानुमापकरूपम् । स्वरूपं लक्षणग्रहोपयोगि । अनुमितिकरणतावच्छेदकरूपं तच्च लिङ्गपरामर्शत्वम् । प्रामाण्यं प्रत्यक्षातिरिक्तप्रमितिकरणत्वम् । आदिपदात् विभाजकरूपपरिग्रहः । चि० दी० गा० २, पृ० २४

मिति। परामृश्यमानलिङ्गत्वमनुमानस्वरूपमिति पूर्वः पक्षः, लिङ्गपरामर्शत्वमनुमानस्वरूपमिति सिद्धान्तः।

परामृश्यमानलिङ्गत्वमनुमानस्वरूपमिति पूर्वपक्षस्थापनम्।

आपाततस्त्वापामरस्य लिङ्गत्वमेवानुमानस्वरूपमिति झटिति प्रतिभाति, परं पक्षे विद्यमानमपि साध्यनिरूपितव्याप्तिविशिष्टत्वेन लिङ्गं ज्ञानाविषयं सद्नुमितिं जनयितुं नालमिति स्फुटप्रतिपत्तिकतया साध्यनिरूपितव्याप्तिविशिष्टत्वेन ज्ञायमानलिङ्गत्वात्मकं परामृश्यमानलिङ्गत्वमेवानुमानस्वरूपमिति केचन व्याचक्षते। न चैवं ज्ञानभिन्नस्य परामृश्यमानलिङ्गस्यानुमितौ करणत्वेऽनुमितेः ज्ञानाकरणकज्ञानात्मकप्रत्यक्षप्रमान्तभूततयाऽनुमानस्य पृथक्प्रामाण्यानुपपत्तिः, स्वातन्त्र्येण प्रमिति-सत्ताया एव प्रमाणसत्तायां नियामकत्वादिति वाच्यम्। अनुमितिप्रमाया अनन्तरमनुमिनोमीत्येवानुव्यवसायो न तु प्रत्यक्षयामीति, तेन, चानुमितौ प्रत्यक्षत्वविरुद्धानुमितित्वजातिसिद्ध्या प्रत्यक्षप्रमायामनुमितेरन्तर्भावासम्भवेनानुमानस्य पृथक्प्रामाण्यसिद्धेः। यत्र स्थलविशेषे ज्ञानस्यैव हेतुत्वं तत्र जायमानाया अनुमितेर्ज्ञानकरणकत्वेन प्रत्यक्षलक्षणानाक्रान्तायाः पृथगस्तित्वस्य जागरूकतया तत्करणस्य ज्ञानात्मकस्यानुमानस्य स्वतन्त्रप्रामाण्योपपत्तेर्निष्प्रत्यूहत्वाच्च। नन्वेवमप्यनुमितित्वजातिमत्तया सिद्धायामनुमितौ ज्ञानभिन्नहेतुकायां "ज्ञानाकरण[६]कज्ञानत्वात्मकस्य" प्रत्यक्षलक्षणस्यातिव्याप्तिः दुर्निवारैवेति चेन्न। "ज्ञानाकरणकज्ञानवृत्त्यनुभवत्वव्याप्यचा[७] क्षुषा-

---

६. (क) ज्ञानाकरणकं ज्ञानमिति तु वयम्। चि० १, पृ० ५६५
(ख) अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। न्या० सि० मु० पृ० १७४

७. (क) ज्ञानेति। ज्ञानाकरणकज्ञानवृत्यनुभवत्वव्याप्यजातिमत्त्वमर्थः। तेन विशिष्टवैशिष्ट्यादिप्रत्यक्षे नाव्याप्तिः। चि० दी० जा० २, पृ० ७१
(ख) ज्ञानाकरशकज्ञानत्वेति। तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वेनेत्यर्थः। उक्तलक्षणे च चाक्षुषवृत्तित्वादिकं जातिविशेषणमुपगम्यानुमितेर्व्यावर्तन सम्भवादित्यस्वरसः केचिदित्यनेन सूचितः। चि०दी० गा० २, पृ०१०७

दिवृत्ति जातिमत्त्वम्" ज्ञानत्वा[८] वच्छिन्नकरणकत्वाभाववज्ज्ञानवृत्त्यनुभवत्वव्याप्यचाक्षुषादिवृत्तिजातिमत्त्वमित्येवं वा प्रत्यक्षलक्षणस्वीकारेण तादृशजातेः प्रत्यक्षत्वस्यानुमितावसत्त्वेनातिव्याप्त्यसम्भवात् ।

लिङ्गपरामर्शत्वमनुमानस्वरूपमिति सिद्धान्तपक्षव्यवस्थापनम्—

परं नेदं युक्तिसहम्, परामृश्यमानलिङ्गत्वमनुमानस्वरूपमिति वादिनोप्यनुमानलक्षणमनुमितिकरणत्वमेवाभिमतम् । इतरभेदानुमापकत्वमेव लक्षणत्वम् । प्रकृते हि वस्तुमात्रस्यैव तत्तत्साध्यविशेषानुमितौ लिङ्गत्वसम्भवेन परामृश्यमानलिङ्गत्वं निर्विवादम्, तथा च परामृश्यमानलिङ्गात्मकानुमानेतराप्रसिद्ध्या तद्भेदानुमापकत्वस्यानुमितिकरणत्वे दुरुपपादतया तस्यानुमानलक्षणत्वानुपपत्तेः लिङ्गपरामर्शत्वस्यानुमानस्वरूपत्वे तु वस्तुमात्रस्य परामर्शानात्मकतया तदितरप्रसिद्ध्या तद्भेदानुमापकत्वस्यानुमितिकरणत्वे सूपपादतया न भवत्यनुमितिकरणत्वस्यानुमानलक्षणत्वानुपपत्तिः । "कारणत्वं चान्यत्र पारिमाण्डल्या[९]दिभ्यः" "पारिमाण्डल्यभिन्नानां कारणत्वमुदा[१०]हृतम्" इत्यादि दिशा न्यायवैशेषिकदर्शनेऽणुपरिमाणे कारणत्वाभावस्वीकारेण तत्र कारणत्वापरपर्यायलिङ्गत्वाभावस्य स्फुटतया परामृश्यमानलिङ्गेतरत्वं प्रसिद्धमिति तु न रम्यं वचः । परामृश्यमानं लिङ्गं नानुमितिकरणमिति मतविशेषमादृत्यैव तद्ग्रन्थप्रसरेण मतविशेषस्यास्य परीक्षणावसरे तदनुपयोगात् । अकारणत्वस्य समवाय्य-

८. "ज्ञानाकरणकेति" ज्ञानत्वावच्छिन्नकरणकत्वाभाववज्ज्ञानत्वं, ज्ञानकरणकत्वयभिचार्यनुभवत्वव्याप्यजातिमत्त्वं वार्थः । चि० दी० प्रकाश २, पृ० ९३

९. (क) कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः । प्रशस्त० (सा०वै०प्र० पृ० ४७)
(ख) कार्यमात्रं प्रत्यकारणपारिमाण्डल्यादादेवानुमितिकारणत्वेतरस्य प्रसिद्धिसौलभ्यादाचार्यमतेऽपि तद्धेतुकानुमितौ परामर्शस्यैव कारणत्वादिति दिक् । चि० दी० जा० २, पृ० ७१

१०. पारिमाण्डल्यमणुपरिमाणम्, कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं न कस्यापि कारणम् । न्या० सि० मु०, कारिका १५, पृ० ७८

ण्यभावप्रतियोगिनः प्रत्यक्षायोग्यत्वात्। 'अभाव[१३]प्रत्यक्षे तत्प्रतियोगिनः प्रत्यक्षयोग्यत्वस्य तत्प्रतियोगितावच्छेदकधर्मस्य च प्रत्यक्षयोग्यत्वस्यावश्यमपेक्षणात्' प्रत्यक्षं प्रति आश्रयप्रत्यक्षस्यापि कारणतया प्रामाण्याभावस्याश्रयत्वेनाभिमतस्यानुमानस्य व्याप्तिज्ञानात्मकस्य तदाश्रयीभूतानन्तानन्तव्यक्तीनां भेदेनापरिमेयसङ्ख्याकस्य केनापि जनेन युगपत् प्रत्यक्षयितुमशक्यतया तद्वृत्तिप्रामाण्याभावस्य प्रत्यक्षासम्भवाच्च। अनुमानोपमानादिभिस्तत् साधनीयमित्यपि न विचारसहं चार्वाकनये तेषां प्रमाण[१४]त्वासिद्धया तैरनुमानेऽप्रामाण्यनिश्चयासम्भवात्।

परमत्र चार्वाकः "अनुमाने नाहमप्रामाण्यं प्रमिणोम्यपितु सम्भाव[१५]यामी"ति वदन् "अनुमानं न प्रमाणं प्रमितिकरणतावच्छेदकधर्मशून्यत्वात्। यन्नैवं तन्नैवं यथा घटपटादिः" इत्येवं व्यतिरेक्यनुमानेन तत्राप्रामाण्यं सम्भावयितुं शक्यमिति कदाचिद् वदेत्। तत्राप्यनुमानात्मकस्य पक्षस्याप्रसिद्ध्या कथमेवं व्यतिरेक्यनुमानं सम्भावनास्पदमिति प्रत्यवस्थानं प्रत्यवतिष्ठते। न हि अत्रानुमितिकरणत्वात्मनानुमानं प्रसिद्धिं नेतुं शक्यं

---

१३. (क) संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता। अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतापेक्षिता। मुक्तावली

(ख) प्रतियोगिनो योग्यतेति, योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वमित्यर्थः। अत्र द्रव्यसामान्यभाववारणाय मात्रेति। गुरुत्ववद्घटात्यन्ताभाववारणाय विशेष्यदलम्। दिनकरी

१४. अनुमानं न प्रमाणम्। तद्धि व्याप्तिज्ञानसापेक्षम्। व्याप्तिश्च व्यभिचाररहितः सम्बन्धः। स न ज्ञातुं शक्यते।······एवं भूयः सहचरितयोरपि मित्रयोर्मिथो-व्यभिचारः स्त्रीसङ्गादौ दृश्यत एव तथा च व्याप्तिग्रहासम्भवादनुमानं न प्रमाणम्। महिषश्वपुरुषो मातङ्गीवयोषिदित्युपमानात् प्रमाज्ञानासम्भवात्। एवं शब्दोऽपि न प्रमाणम्। कस्यापि यथार्थवक्तुरभावात्। सर्वद० सं० दर्शनाङ्कुर, पृ० ३

१५. नन्वभिहितमेव साधर्म्यदर्शनं संभावनां भावयति, सम्भावनैव च बहुशोव्यवहारहेतुरित्यत आहानुमानमिति। चि० दी० २, पृ० १३४।

चार्वाकेण, तेनानुमितेरनङ्गीकारेण तन्मते तत्करणत्वस्याप्रसिद्धेः, परामृश्यमानं लिङ्गमेवानुमानमिति मतमाश्रित्य परामृश्यमानलिङ्गत्वेन धूमत्वादिनानुमानस्य पक्षत्वमिति पक्षस्तु न क्षोदक्षमो धूमत्वादिना धूमादिषु प्रामाण्याभावस्य नैयायिकादिभिः स्वीकृततया सिद्धसाधनस्य दुर्वारत्वात्। "नैयायिकाभिमतस्य धूमादिविशेष्यकव्याप्तिनिश्चयस्यैव तादृशनिश्चयत्वेनानुमानत्वमङ्गीकृत्य तत्राप्रामाण्यं साध्यते" इति कथनं तु न कमनीयम्, चार्वाकमते सर्वत्र हेतावयोग्योपाधिशङ्कया व्यभिचारसंशयस्यैव जागरूकतया व्याप्तिनिश्चय[१६]त्वाप्रसिद्धेः। व्यभिचारसंशयस्य व्याप्तिसंशयात्मकतया व्याप्तिसंशयत्वेनैवानुमानस्य पक्षत्वमिति तु न रम्यं व्याप्तिसंशये प्रामाण्याभावस्य नैयायिकमतसिद्धतया सिद्धसाधनस्य दुर्निवारत्वात् इति चेन्न; व्याप्तिज्ञानत्वेनैवानुमानस्य पक्षत्वस्वीकारे व्याप्तिनिश्चयात्मके तस्मिन् प्रामाण्याभावानभ्युपगमेन नैयायिकनये सिद्धसाधनाप्रसरेण चार्वाकमते च व्याप्तिसंशयात्मकस्य तस्य प्रसिद्ध्या पक्षाप्रसिद्धेश्चाप्रसरेण लेशतोऽपि दोषशङ्काया अनवकाशात्। अत्र व्याप्तिज्ञानैकदेशे व्याप्तिसंशये नैयायिकनये प्रामाण्याभावस्य सिद्धतया सिद्धसाधनमिति तु नानियोज्यमवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धिक[१७]त्वात् अथापि व्याप्तिज्ञानस्य स्वविषयकमानसप्रत्यक्षं प्रति करणतया तत्र प्रमाकरणत्वरूपं प्रामाण्यं चार्वाकमतसिद्धमिति बाधो दुर्निवार एवेति तु नाशङ्कनीयं चार्वाकमते सर्वस्याति विशिष्टविषयकस्य प्रत्यक्षस्यालीकतया व्याप्तिज्ञानविषयकमानसप्रत्यक्षस्याप्यलीकत्वेन प्रमात्वासिद्ध्या विषयविधया तत्करणे व्याप्तिज्ञाने प्रामाण्याभावस्यैव चार्वाकमतसिद्धत्वात्।

---

१६. अथानुमानं न प्रमाणम्, योग्योपाधीनां योग्यानुपलब्ध्याभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात्। चि० २, पृ० ३८

१७. परं तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेदर्शनात्, पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि। न्या० सि० मु०, पृ० २३६

नन्वेवमप्यनुमानं न प्रमाणमित्येव प्रतिज्ञावाक्यं तद्घटकीभूतस्यानुमानपदस्य व्याप्तिज्ञानपरत्वं लक्षणयैवाभ्युपेयमिति दोषस्तु दुर्निवार इति चेदस्तु प्रतिज्ञाघटकमनुमानपदमनुमितिकरणपरमेव, पूर्वोपदर्शितदिशा पक्षाप्रसिद्धिस्तु नैव सम्भवति, विशिष्टस्य सर्वस्याप्यर्थजातस्यालीकतया पदप्रतिपाद्यस्य पदार्थमात्रस्यालीकत्वादलीकस्याप्यनुमितिकरणत्वविशिष्टस्यानुमानपदार्थत्वसम्भवेन पक्षत्वस्वीकारे बाधकाभावात् ।

विशिष्टस्य पदार्थमात्रस्यालीकत्वमभ्युपगच्छतश्चार्वाकस्यायमाशयः—स्वलक्षणमात्रस्यैव वस्तुनः सत्यतया तदुपरि प्रतीयमानानां नामरूपजात्यादीनामलीकतया सतः स्वलक्षणस्य वस्तुनोऽसतश्च जात्यादेः सम्बन्धस्य मिथ्यात्वं निर्विवादम् । तेन च जात्यादिविशिष्टस्य वस्तुनो नास्ति वास्तविकं सत्त्वं तथापि स्वलक्षणेन लौकिकव्यवहारस्य दुर्घटतयालीकमपि विशिष्टमादाय लौकिकव्यवहारः कथञ्चिदुह्यते तथैव प्रकृतेऽप्यनुमितिकरणत्वावच्छिन्नमलीकमपि पुरस्कृत्य प्रामाण्याभावानुमितिः सूपपादा इति ।

न चैवमपि व्याप्तिज्ञानत्वेनानुमितिकरणत्वेन वानुमानस्य पक्षत्वमभ्युपेत्यापि तत्र प्रामाण्याभावसाधनं दुष्करम्; प्रमितिकरणतावच्छेदकरूपस्य व्याप्तिनिश्चयत्वस्य नैयायिकमतेन तत्र सिद्धतया स्वरूपासिद्धेः सत्त्वादिति वाच्यम्, योग्योपाधीनामनुपलम्भेऽप्ययोग्योपाधिशङ्कया सर्वेष्वपि हेतुषु साध्यव्यभिचारित्वसंशयेन व्याप्तिनिश्चयत्वासम्भवात् । भूयः सहचारदर्शनस्य व्यभिचारसंशयप्रतिबन्धकतया व्याप्तिनिश्चयस्सम्भवतीति तु दुराशामात्रम्, शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्व[१८]योर्हीरके व्यभिचारोपलम्भेन भूयः सहचारदर्शने व्यभिचारसंशयप्रतिबन्धकत्वस्य स्वीकर्त्तुमशक्यत्वात् ।

---

१८. सेयं व्याप्तिर्न भूयोदर्शनगम्या......अपि च पार्थिवत्वलोहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात् । चि० २, पृ० १७०-१७१

अनुमानाप्रामाण्ये पर्वते धूमदर्शनानन्तरं वह्न्यर्थिनः पर्वताभिमुखं प्रवृत्तिः कथमिति प्रश्नः तत्समाधानञ्च

अथापीदं चिन्तनीयम्, अनुपदोक्तदिशानुमाने प्रमिजनकतावच्छेदकरूपशून्यत्वहेतुना यद्यप्रामाण्यं सिद्धयत्येव तर्हि पर्वते धूमदर्शनानन्तरं बह्न्यर्थिनः पर्वताभिमुखं जायमाना प्रवृत्तिः कथमुपपद्येत, सर्वानुभवसिद्धेयं प्रवृत्तिर्नापलपितुं योग्या, प्रवृत्तिरियं पर्वते वह्नेर्ज्ञानं विना दुरुपपादा, प्रवृत्ति प्रतीष्टसाधनताज्ञानस्य हेतु[१९]त्वात्। पर्वताभिमुखं प्रवर्तमानस्य वह्न्यर्थिनः पुरुषस्य वह्निप्राप्तिरेवेष्टम्[२०]। इष्टस्यास्य साधनं पर्वताभिमुखं गमनं तदैव सम्भवति यदा पर्वतस्य वह्निमत्त्वं निर्धारितं स्यात्, परमेवं पर्वतस्य वह्निमत्त्वनिर्धारणमनुमानप्रामाण्यवादिनश्चार्वाकस्य मते कथं स्यात्? प्रत्यक्षमात्रस्य प्रामाण्यमङ्गीकरोति चार्वाकः। तदनुसारं प्रकृते "पर्वते वह्निमत्त्वनिर्धारणं प्रत्यक्षात्मकमेवाभ्युपेयताम्" इति तु चार्वाको नैव वक्तुं प्रभवति, पर्वते विद्यमानेन वह्निना सार्धं तदानीं चक्षुः सन्निकर्षाभावेन पर्वते वह्निप्रत्यक्षस्यासम्भवात्। स्मरणात्मकमेवास्तु तदिति वचो नितरामुपेक्षणीयम्, स्मरणस्य स्व[२१]समानविषयकानुभवजन्यसंस्काराधीनतया "पर्वतोवह्निमानि"ति स्मरणपूर्वं वह्निमत्पर्वतविषयकसंस्कारस्य जनको यः "पर्वतः वह्निमान्" इत्येवंविधोऽनुभवस्तस्य तादृशस्मरणात् पूर्वमवश्यं तदानीं स्वीकर्त्तव्यस्याभावात्।

---

१९. चीकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा। उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्॥ कारिकावली १५०, १५१, कारि; पृ० ५१०, ५३६

२०. ननु लिङ्गज्ञानस्य पर्वतो वह्निमानित्यधनुमित्यजनकत्वे लिङ्गपरामर्शानन्तरं वह्न्यर्थिनः पर्वतगमनप्रवृत्यनुपपत्तिः। पर्वतादौ वह्न्यादिनिश्चयं विना तद्गमने वह्निप्राप्तिसाधनतावच्छेदकवह्निमद्देशगमनत्वनिश्चयायोगादिति। चि० दी० गा०, पृ० १३४

२१. अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वादित्याशङ्क्य प्रकारान्तरेण तादृशस्मरणमुपपादितं मिश्रैः। शक्ति० वा०, पृ० ५८

एवं पर्वते धूमदर्शनानन्तरं "पर्वतो वह्निमान्" इति वाक्यप्रयोगोऽपि प्रामाणिकैः क्रियमाणो नोपेक्षितुं योग्यः, सोऽप्यनुमानाप्रामाण्यवादिनश्चार्वाकस्य नये कथमुपपादनीयः ? स्पष्टमिदम्—वाक्यप्रयोगः वाक्यार्थविषयकावबोधपूर्वक एव भवति। पर्वते धूमदर्शनानन्तरं "पर्वतो वह्निमान्" इत्येवं वाक्यप्रयोगो वाक्यार्थस्य वह्निमत् पर्वतस्यावबोधं विनाऽशक्यः, वह्निमत्पर्वतावबोधश्च चार्वाकदिशा कीदृशः ? प्रत्यक्षात्मकः स्मरणात्मको वा स नैव सम्भवतीत्यनुपदमेव प्रदर्शितम्। तथा सत्यनुमानाप्रामाण्यमभ्युपगच्छतश्चार्वाकस्य नये पर्वते धूमदर्शनान्तरं पर्वताभिमुखं वह्न्यर्थिनः प्रवृत्तिः, "पर्वतो वह्निमान्" इत्येवं प्रामाणिकानां शब्द[२२]प्रयोगश्च कथमुपपद्येतामिति प्रश्नोऽसमाधेय एव तिष्ठति।

---

२२. (क) नन्वेवं वह्निसन्निकर्ष-पर्वतविशेष्यकवह्निप्रकारकसंस्काराद्यभावदशायामपिधूमदर्शनानन्तरं "पर्वतोवह्निमान्" इत्यादि प्रयोगोऽनुभूयते स कथं स्यात् तादृशशब्दप्रयोगंप्रति पर्वतविशेष्यकवह्निप्रकारकबुद्धेर्हेतुत्वादित्यत आह, "लोक इति, लोकानामित्यर्थः; धूमादीति, वह्नीन्द्रियसन्निकर्ष-पर्वतविशेष्यकवह्निप्रकारकसंस्काराद्यभावदशायामित्यादि, "वह्न्यादिव्यवहारश्च" पर्वतो वह्निमानित्यादिशब्दप्रयोगः। चि० रह० पृ० २१

(ख) किञ्चानुमानमनङ्गीकृत्य परप्रत्यायनाय शब्दप्रयोगोऽप्ययमशक्यः। परवेदनप्रतिपत्तेरेव तदन्तरेणाशक्यत्वात्। न चेत् परप्रत्यायनाय नूनमौन्मत्यमाविष्करोति वक्तुरित्याह। अपि चेति। न्या० वा० ता० प० [अ० १ आ० १ प्र० २ सू० ५] पृ० ६५६-६५७

(ग) न हि य एव शब्दप्रयोक्ता तस्मैव स प्रत्यायकः। न चोपमानं व्युत्पन्नस्यैव व्युत्पादकं किन्त्वन्यस्येत्यर्थः। नापि परप्रत्यायनाय यदा शब्दमुपमानं वा प्रयुङ्क्ते तदा तत्र तयोः प्रामाण्यमित्याह। परेति। [परप्रत्ययेऽपि धर्म्यसिद्धेः] धर्मिणः प्रतीतावेव तत्प्रत्यायनाय शब्दादिः प्रयुज्यते न चानुमानं विना तत्सिद्धिरित्यर्थः। अथ चार्वाकमते देहस्यैवात्मतयां प्रत्यक्षतः स्यादेव तत्सिद्धिः। तत्राह। सिद्धावपीति। [सिद्धावपि परस्याप्तत्वानिश्चयात्] वक्तुराप्तत्वासिद्धेस्तद्वाक्यमात्रान्न प्रामाण्यादिसिद्धिरित्यर्थः, ततः प्रवृत्तिसंवादादिनाऽऽसत्त्वं निश्चेयमुपजीव्यबाधान्नानु-

अत्रैवं चार्वाक उत्तरयति—महानसचत्वरादिषु नैकेषु स्थानेषु धूमेन सह वह्निं साक्षात्कृतवतः पुरुषस्य "यो यो धूमवान् स स वह्निमान्[२३]" इत्येवं व्याप्तिधीर्जायते। इयं व्याप्तिधीर्धूमवत्त्वेन भासमानेषु सर्वेष्वपि पर्वतादिषु वह्निं विशेषणविधयावगाहते। अनया च धिया "यो यो धूमवान् स स वह्निमानिति" संस्कारोऽप्युत्पद्यते। अयञ्च स्वसमानाकारकस्मृतेरुत्पादं यावत् तिष्ठति[२४]। अत एवैतादृशसंस्कारविशिष्टो मानवो यदा कदापि पर्वतादौ वह्नेः प्रत्यक्षं कर्त्तुमसमर्थस्तत्र धूमं साक्षात्करोति तदा तस्यायं संस्कार उद्बुद्धो भवति। फलतो धूमवत्त्वेन पर्वते वह्न्यवगाहिनी स्मृतिरपि तस्योत्पद्यते। इयमेव स्मृतिर्धूमाश्रयपर्वतादौ "वह्न्यर्थिनो गमनम्" "पर्वतो वह्निमानिति" प्रामाणिकानां वाक्यप्रयोगञ्च उपपादयितुमलमिति, नाभ्युपेयमनुमानस्य प्रामाण्यमिति।

---

मानाप्रामाण्यसाधनं पदमासादयतीत्याह तस्मादिति। [तस्मादतीन्द्रियविधिनिषेधयोरनुमानमनङ्गीकृत्याशक्यत्वादशक्यापह्नवमनुमानमित्यर्थः।] न्या० वा० ता० प० [अ० १ आ० १ प्र० २ सू० ५] पृ० ६५५

२३. धूमदर्शनाच्चोद्बुद्धसंस्कारो व्याप्तिं स्मरति "यो यो धूमवान् स सोऽग्निमान् यथा महानसम्" इति। त० भा०, पृ० ११२

२४. (क) नाप्यनुभवत्वेन तथात्वं संस्कारस्य फलनाश्यतया सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात्, समानाकारस्यैव फलस्य नाशकत्वात्। चि० दी०, पृ० ९४

(ख) संस्कारस्य फलनाश्यतया, स्वजन्यस्मृतिनाश्यतया प्रथमस्मरणेनैव पूर्वानुभवजन्यसंस्कारनाशे, सकृदनुभूतस्य स्मरणोत्तरमननुभूतस्य विषयस्यानुभवरूपकरणव्यापारासत्त्वेनास्मरणप्रसङ्गात् स्मरणान्तरानुपपत्तेरित्यर्थः। चि० दी० गा०, पृ० ९७

# सर्वासां समस्यानां समाधानं वेदमार्गेणैव भवितुमर्हति इति

**मूलराज शास्त्री**

सर्वेषां मानवानां कल्याणाय भगवन्निश्वासभूतो वेदः प्रादुर्भूत इति सायनेन लिखितमस्ति "यस्य निश्वसितं वेदो यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्" इति। ज्ञानार्थकविदधातोर्घञ्-प्रत्ययेन निष्पन्नो वेदशब्दः। वेद्यन्ते ज्ञायन्ते धर्मार्थकामामोक्षा अनेनेति वेदः, तच्च वेदः मन्त्रब्राह्मणात्मकः शब्दराशिरिति। योऽर्थो मन्त्रेषु प्रतिपादितस्तमेवार्थं प्रतिपादयितुं ब्राह्मणभागः सम्प्रवृत्त इति। मन्त्रब्राह्मणेष्वपि यत् प्रतिपादितं तेषामतिदुरूहत्वात् सुगमोपायेन ज्ञातुं निरुक्ताद्यङ्गानां पुराणेतिहासग्रन्थानाञ्च कल्पना कृता यथा निरुक्तशास्त्र उक्तमपि साक्षात्कृतधर्माण ऋषयो बभूवु। तेऽपरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च। अतो ज्ञायते सर्वं शास्त्रजातं वेदमूलकमेव। तेषु यन्निर्दशितं तत्सर्वं वेदानुसारमेवेति बोद्धव्यम्। पुराणविषयेऽप्युक्तम् "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति" इति। वेदेषु समासेनोक्तमर्थमेव पुराणेतिहासेषु विस्तृतरूपेण प्रतिपादितमिति कथनस्यायमभिप्रायो यत् सर्वासां समस्यानां समाधानार्थं वेदपुराणेतिहासानां समानरूपेणापेक्षेति।

### अधुना समस्याशब्दस्य प्रतिपादनं क्रियते

समस्यते संक्षिप्यतेऽनयेति समस्या। समुपसर्गपूर्वकास्धातोः करणे क्यप्प्रत्यये—"अजाद्यतष्टाप्" इति पाणिनिसूत्रेण स्त्रियां यप्-प्रत्ययेन

समस्याशब्दो निष्पद्यते । व्याकरणरीत्या समस्याशब्दस्य रूपोऽर्थो निष्पन्नः । अमरकोषेऽपि "समस्या तु समासार्थः"—इत्येव प्रतिपादितम् । परन्तु प्रकृते समस्याशब्दस्यान्योऽर्थः विवक्षितः । यथा शास्त्रे प्रवीणशब्दस्य प्रकृष्टो वीणायामिति व्युत्पत्या वीणावादिने वैशिष्टयं प्रतिपादयन्नपि प्रवीणशब्दो व्युत्पत्तिलभ्यमर्थं निराकृत्य निपुणे रूढः । एवमेव कुशलः कुशाल्लाँतीति व्युत्पत्तिलभ्यमर्थं परित्यजन् कर्मणि कुशल इत्यत्र पक्षरूपेऽर्थे प्रयुज्यते । एवं हि समस्याशब्दो व्युत्पत्तिलभ्यमर्थं परिहाय नानाविधान् विरुद्धानर्थान् बोधयति । यथा प्रवृत्तेकार्ये यदा बाधा समुत्पद्यते तदोच्यते कठिनसमस्या समुत्पन्ना । तथा च साम्प्रतं भारतस्याभ्युदयाय नानाविधा समस्या समुपस्थिता । नारी-समस्या, अस्पृश्यसमस्या, समाजवादसमस्या, राष्ट्र-रक्षा समस्या, नैतिक-समस्योत्पाद्या बह्व्यः समस्यास्सन्ति, परं तासां सर्वासां समाधानं सुचारुरूपेण यथा वेदमार्गेणैव भवति न प्रकारान्तरेण ।

## नारी समस्या

नारी समस्या सुगमतया वेद मार्गेणैव सिद्धयति । वेदेमन्त्रो यथा "तम्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः । नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽधिरोचने दिवः" यजुः० अ० १५ मं० ५० । हे देवाः पत्नीभिः पुत्रैर्भ्रातृभिरनुगच्छेम । अस्मिन् मन्त्रे सर्वेषां समानत्वं प्रतिपादितं यादृशः पुरुषस्याधिकारस्तथैव स्त्रिया अपि । अतिगहने नानाक्लेशभाजनेऽस्मिन् संसारे जीवनं यापयितुं यथा मनुष्याणामधिकारस्तथैव स्त्रीणामपि । सर्वत्रधर्मशास्त्रेव्यपि स्त्रीणां पूज्यत्वं सम्मानयोग्यत्वञ्च विस्तरेण प्रदर्शितम् । भगवान् मनुःमनुस्मृतौ यथा लिखति "यत्रनार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः" इति (अध्या० ३ श्लो० २१) एवमेव सर्वत्र यज्ञेषु सपत्नीको यजमान इत्युलभ्या पत्नीमन्तरा यजमानस्य यजमानत्वमेव न सम्भवति । अर्थात् पत्न्या विना यज्ञयागादि सर्वं धर्मकार्यं न फलदायकं भवति । अपि च वेदे नारी प्रकृतिरूपा पुरुषस्त्वीश्वर रूपस्तयोः संगमेनैव कल्याणं जायते । पुरुषशरीरेऽपि वामभागः स्त्रिया दक्षिणभागः पुरुषस्येति ।

एवमेव स्त्रीशरीरेऽपि कल्पना कृता। उभयोः साम्यं प्रदर्शितमिति व्यवस्था प्रमाणयुक्ता दृश्यते।

निरुक्तशास्त्रेऽपि मन्त्रो दृश्यते—यथा "अङ्गादङ्गात् सम्भवसि हृदयादधिजायते" इत्यादि। अर्थात् येन प्रकारेण पुत्रोत्पत्तिर्भवति तेनैव प्रकारेण कन्यापि जायते। रेतः—सिञ्चनं समानमेव नहि तन्न काचिद् विशेषतावलोक्यते। पित्रोः कर्म समानमेव। अशनादिक्रियापि समानैव। अतः स्त्रीपुरुषेषु या भेदव्यवस्था समुत्पादिता सा केवलं वेदज्ञानशून्यैर्भोग-लिप्साप्रियैः कामवासनावासितैर्नराधमैरेव। वेदेन तु स्त्रीपुरुषयोः समानोऽधिकार इत्येव साधितम्।

### अस्पृश्य-समस्या

देशो बहुविधेषु वर्गेषु विभक्तस्तद्यथा ब्राह्मणक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णाः। शूद्रेष्वपि बहिष्कृतशूद्रा अबहिष्कृतशूद्राश्च। एवं यवनाः, शिष्या जैना बौद्धा नानाजातयो भिन्नभिन्नमतावलम्बिनो दृश्यन्ते। तेषां प्रत्यहं परस्परः कलहोऽपि श्रूयते उदन्त-पत्रेषु च पठयन्ते। इदं सर्वं तु वेदज्ञानशून्यत्वादेव जायते। वेदेषु कुत्रचिदपि न लिखितं यन्मिथः कलहः क्रियेत। सम्पन्नाशो विधीयेत। मनुष्यत्वेन सर्वे समाना एव। वर्ण-व्यवस्था, वर्गव्यवस्था, धर्मव्यवस्था वा राष्ट्रसञ्चालनार्थं व्यवहार-सम्पादनार्थं कृता। तत्तु परस्परविवादार्थम्। ऋग्वेद उक्तमेव यत् "स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव। पुनर्ददताघ्नता जानता संगमेमहि (म० ५।अ० ४।सू० ५१") अरुण मन्त्र-सारथिर्भगवान् सूर्यनारायणः स्व-प्रकाशेन जीवमात्रस्यान्धकारं नाशयति प्राणिमात्रेभ्यः स्वप्रकाशं वितरति। नहि भेदबुद्ध्या व्यवहारं विधत्ते यथायं ब्राह्मणः अस्मै विशेषप्रकाशो देय इति। अयं शूद्रः, अस्मै मध्यमः प्रकाशो देय इति। सर्वे मानवाः पशवः पक्षिणो वा समानरूपेण सूर्यस्य प्रकाशं प्राप्नुवन्ति। एवमेव चन्द्रमा अपि कौमुद्याऽविशेषेण जनानाह्लादयति यथा ब्राह्मणांस्तथैव शूद्रादीनप्यतो वेदेन शिक्षितं यदस्माकं सर्वाणि कार्याणि जीवमात्रस्य कल्याणाय स्युर्नहि वर्ण-भेदेन यद्वा वर्गभेदेन स्युः। गीतायामपि भगवता श्रीकृष्णेनोक्तं यथा "शुनि

चैव श्वपाकेच पण्डिताः समदर्शिनः" । अतो वेदद्वारा सिद्धमिदं यद् वर्णादव्यवस्था केवलं राष्ट्रसञ्चालनार्थमेव न च परस्परं स्पृश्यास्पृश्यरूपं दुष्कर्मं कर्मु ।

यजुर्वेदेऽपि मन्त्रो दरीदृश्यते यत् "मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे, मित्रस्य चक्षुषा समीक्षामहे।" (अ० ३६ क० १८।) मित्रशब्द-स्यायमेवार्थः यन्मीयति हिंसाकर्म तस्मात्-त्रायत इति मित्रम्। सर्वां प्राणिजातं मित्रवत् पश्याम्यर्थात् सर्वेषां भूतानां मित्रवद्रक्षणं पालनञ्च स्यात्। अस्माकं राष्ट्रे न कोऽप्युत्कृष्टापकृष्टव्यवहारद्वारा इयेत। सर्वे सुखिनः स्युः ।

## समाज-समस्या

समाजवादे "कश्चित् प्राणी धनिकः स्यात् कश्चिच्चनिर्धनः। कश्चित् सुखी स्यात् कश्चिच्च दुःखी, कश्चिद् विशाल भवने निवसेत्। कश्चिच्च पर्णकुटचाम् । एको नानाविधान् पदार्थान् भुञ्जीतोऽपरेण कदन्नमपि दुरापम् भवे"दिति तु नैव संभवति । परं प्रतिदिनं दृश्यते सर्वत्रै-तद् वैषम्यं । एतत् कथं भवतीति विचारणायामेतदेवावगम्यते यद्वेदज्ञान-शून्यत्वादेवैवं भवति वेदेतु "ईशावास्यमिद ꣳ सर्वं यत् किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथाः मागृधः कस्यस्विद्धनचम्" (यजु० अ० ४० कं० १।) अस्य मन्त्रस्यायमभिप्रायो यज्जगति यत् किञ्चित् प्रतिभाति तत्सर्वमीशेनैव व्याप्तमतस्तेन परमात्मना त्यक्तेन भुञ्जीथाः। ममेदमिति धियं त्यज। कस्य पुनरेतद्धनं न कस्यचिदपि इत्यभिप्रायः। अर्थादावश्यकता-नुसारमेव भुङ्क्ष्व नाधिकम्। ईश्वरेण भोगार्थं पदार्था दत्ता न तु संग्रहा-र्थम्। यावत्यपेक्षा वर्तते तावदेव ग्रहीतव्यमिति । श्रीमद्भागवतेऽप्येतदे-वाभिप्रायमधिकृत्य लिखितं वर्तते व्यासे "यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्। अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति" एक० ७ अ० १४ श्लो० ८ । एवंविधेनेश्वरादेशाचरणेन न कापि समस्या समुत्पद्यते। समस्या तुं वेदादेशविरुद्धाचरणेन समुत्पद्यते। अद्यत्वे जना महदैश्वर्यं प्राप्य नानाविधान् पदार्थान् सेवन्ते। विलासमयं जीवनं यापयन्ति यस्य परिणामो

दुःखमूलको भवति यथा चर्पटमञ्जर्यां श्रीमच्छङ्कराचार्येणोपदिष्टम्, "सुखतः क्रियते रामाभोगाः। पश्चाद्धन्त शरीरे रोगाः। यद्यपि लोके मरणं शरणम्। तदपि न मुञ्चति पापाचरणम्" अत इदं सर्वं द्रव्यं धनधान्यादिकमपेक्षितादधिकं दुखमूलकमेव। अतो वेदाज्ञां समुल्लङ्घ्य प्रभूतद्रव्यार्जने किमर्थं यत्नः क्रियतेऽहर्निशम्। तथा च महतीं श्रियमधर्मेणैव प्राप्नोति न च धर्मेण यतो हि केनचिदुक्तमेव "न च्छित्वा परमर्माणि न कृत्वा कर्म दुष्करम्। न हत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम्"। अतः प्रतीयते महदैश्वर्यप्राप्तिस्तु पापादेव भवति नान्यथा। अतः किमर्थं वेदविरुद्धं कर्म कृत्वा विनश्वरं भोगपदार्थमर्जयेन्नर इति।

वेद एतदपि प्रतिपादितं यन्मनुष्यो धर्मतो धनमर्जयेत् परं तस्य विनियोगं सम्यग्रूपेण कुर्यात्। धर्मतोऽर्जने न हि दुःखं संग्रहो नैव विधेयः। अथर्ववेदे मन्त्रो यथा "शतहस्त समाहर सहस्रहस्त संकिर। कृतस्य कार्यस्य चेहं स्फातिं समाहर यह" (का० ३, अ० ६, ऋजु० ५, सू० २३, म० ३) अर्थात् शतहस्तैर्धनमर्जनीयं परं सहस्रहस्तैस्तस्य विनियोगः कर्तव्यस्तदैव शोभनं भवति अन्यथा नानाविधा आपत्तयः प्रादुर्भवन्ति। साम्यवादादीनां समुदयो जायते। यथा तडागे निर्गमाभावे जलं दूषितं भवति। तथैव सम्पत्तेः संचयेन विपक्षं प्रवाहः प्रादुर्भवति। अतः सिद्धमिदं यद् वेदेनैव सर्वं साधयितुं क्षमा वयमिति।

### राष्ट्ररक्षा

राष्ट्ररक्षापि वेदमार्गेणैव भवति। यदा सिल्युकसन्नामा यवनेन भारतस्योपर्याक्रमणार्थं सिन्धुतटे शिविरमुपकल्पितं तदानीं भारतस्य दशा दीना हीना चासीत्। परस्परं राज्ञां कलहो वैमनस्यञ्च प्रभूतरे आसीत्। भारतीयभूपतय विलासप्रिया अलसाश्चासन्। तादृशीं तदानींतनीं दशामवलोक्य परमकूटनीतिज्ञेन दूरदर्शिना चाणक्येन चन्द्रगुप्तः प्रेरितः। उक्तश्च हे राजन् साम्प्रतं यदि भारते यवनाक्रमणं सफलं भवति तदा भारतस्य स्वीयं स्वरूपं गौरवञ्चावश्यमेव विनङ्क्ष्यति। अतस्त्वं सद्यस्तस्य सेनाशिविरे गत्वा किञ्चित्कालमध्युष्य सेनास्वेतादृशं प्रचारं विधेहि

यदि साम्प्रतं भवद्भिराक्रमणं क्रियते तदा भवतां सर्वनाशो भविष्यति ? यतोहि साम्प्रतं भारतस्य शक्तिमर्हती विद्यते। तस्याः शक्तेः पराभवः दुष्करं कर्म इति। तदा चन्द्रगुप्तेनोक्तं भो गुरो यवनैः सहाच्शनादिना किं मदीयो धर्मो न नङ्क्ष्यति। तदा चाणक्यस्तं प्रत्युक्तवान् वेदाज्ञा सर्वोपरि विद्यते वेदे युक्तिः क्षत्रियस्य धर्मे राष्ट्ररक्षा। यजु० वेंदे मन्त्रः—आब्रह्मन् ब्राह्मणो ब्रह्म वर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योति व्याधी महारथो आयताम्० अ० २२ के० २२। दर्शनात् राष्ट्रमेवास्माकं प्राण राष्ट्ररक्षणमेव क्षत्रियस्य म्ख्योधर्मः। गीतायां श्री कृष्णेनोक्तं शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्"॥ अ० १८७ श्लो० ४३ इत्यादि प्रमाणदर्शनाज्ज्ञायते मुख्यो धर्मस्ते राष्ट्ररक्षा तदर्थं यदि स्वहानिर्भवति भवतुनाम। न तेन धर्मात् प्रच्यवसेत्वं न चाधर्मं इति कथ्यसे। यद्येकस्य धर्मं बहूनां कल्याणाय नश्यति नासावधर्मं इत्युच्यतेऽपितु धर्मं एव येन बहूनां जनानां धर्मरक्षाजायते। एकस्य धर्मनाशेन काचि हानिर्नभवति। कृत्स्नस्य भारतस्य नाशो भवति, तदा किं तवैकस्य धर्मस्य रक्षा भवितुमर्हतीति विचारणीयम्। धर्मव्यवस्था तु गहना। को धर्मः कश्चाधर्म इति निर्णेतुं वेद एव प्रमाणं न भवान्, अतः वेदो राष्ट्ररक्षा सर्वप्रथमं मानवस्य कर्तव्यमित्यादिशतीति मत्वा स्वकीयं कर्तव्यपालनं विधेहीत्युपदिष्टं चाणक्येन। एवमेव-आचाररक्षापि राष्ट्रस्यैवाङ्गम्। आचारेण विना राष्ट्ररक्षा न भवति। आचारवान् पुरुष एव राष्ट्ररक्षणे समर्थो भवति। "आचारहीनं न पुनन्ति वेदाः" इति वाक्यदर्शनात् प्रतीयते यद्वेद "आचार एव मुख्यो धर्मं" इति प्रतिपादयति। आचारवान् पुरुषः कदचिदपि परद्रव्यापहरणं न करोति। न च स्त्रीणां चरित्रं नाशयति। नैव दीनान् पीडयति। नह्यात्मविरुद्धं कर्म परानुपदिशति। अतः सर्वत्र वेदस्यैव प्राधान्यं प्रतीयते वेदविरुद्धं न किमपि श्रेयस्करमिति मत्वैव स्मृतिवाक्यं दृश्यते यद् वेदादेशविरुद्धं कर्म कुर्वन् व्रजत्यधः। अतो वेदमार्गेणैवास्माकं कल्याणं भवति वेदेनैव सर्वासां समस्यानां समाधानं कर्तुं शक्यते।

# शाब्दबोधे० इत्यादावेकत्वाऽपरत्वान्वयविमर्शः

डॉ० रामनारायण मिश्रः

शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमयदिया भासते। तत्रैकत्वापरत्वस्य च कुत्रान्वय इति विचारणायामुच्यते—यत् पदेऽन्वय-पदार्थे पदार्थावच्छेदके वेति प्रश्ने समाधानं ददते—यदि पदेऽन्वयः स्यात्त-र्ह्येकं यत्पदन्तदर्थानुयोगिकोऽपरं यत्पदन्तदर्थप्रतियोगिकः संसर्ग आकाङ्क्षा-भास्यः। तथा सति, पचतीत्यत्र खण्डशश्शक्तिस्वीकारे पच् धातोरर्थो विक्लितिर्व्यापारश्च भवति। अनुकूलत्वसम्बन्धश्चाकांक्षाभास्यः, तथा च व्यापारानुयोगिकविक्लितिप्रतियोगिकानुकूलत्वसंसर्गाकाङ्क्षाभास्यः इति बोधो भवति। परञ्च पदेऽन्वये कृते सत्येकं यत् पदमित्यनेन पचतीत्यत्र पच्पदं तदर्थो व्यापारस्तदनुयोगिकः। अपरमित्यस्यार्थो भिन्नं पदमुदासीन-मथवा सन्निहितमेवाति पदं शक्तं पदमित्यनुरोधात्। तदर्थआश्रयः न तत्प्रतियोगिकः संसर्गो भवति, यदर्थप्रतियोगिकश्चसम्बन्धो भवति न तस्माद्भिन्नं पदं भवति, यद्भिन्नं पदं भवति न तदर्थप्रतियोगिकः संसर्गो भवति, अतस्तस्यैकस्वस्यापरत्वस्य च पदेऽन्वयाभावात् न तस्याकाङ्क्षा भास्यत्वम्।

यदि पदार्थेऽन्वयः क्रियते तदैकपदार्थानुयोगिकोऽपरपदार्थप्रतियोगिकः संसर्ग आकाङ्क्षाभास्यो भवति तेन पचतीत्यत्रैकपदार्थो व्यापारस्तदनु-योगिकः स्वेतरपदार्थोविक्लितिस्तत्प्रतियोगिकोऽनुकूलत्वसंसर्गो-ह्याकाङ्क्षा भास्यो भवति तेनैकत्वस्यापरत्वस्य च पदार्थेऽन्वयात्तस्याकाङ्क्षाभास्यत्व-मुपपद्यते परमेवं पदार्थेऽन्वये कृते पचतीत्यत्र दोषाभावेऽपि नीलोघट इत्या-दावभेदान्वयस्थले दोषः स्यादेव। तत्र प्रतियोगिन एवानुयोगित्वात् अतस्तस्याकाङ्क्षाभास्यत्वानापत्तिः।

तस्मादेकत्वापरत्वयोः पदार्थावच्छेदकेऽन्वयः क्रियते। तथा सत्येकपदार्थतावच्छेदकावच्छिन्नानुयोगितानिरूपकः स्वेतरपदार्थतावच्छेदकावच्छिन्नप्रतियोगितानिरूपकः संसर्ग आकांक्षाभास्यः।

तथा च नीलो घट इत्यत्रैकपदार्थतावच्छेदकं घटत्वं तदवच्छिन्नानुयोगिता घटनिष्ठा तन्निरूपकः स्वेतरपदार्थतावच्छेदकं नीलत्वं तदवच्छिन्नाप्रतियोगिता नीलनिष्ठा तन्निरूपकोऽभेदसम्बन्ध आकाङ्क्षाभ्य एव न काचनानुपपत्तिः। परमेवं सति नीलो घट इत्यादौ दोषाभावेऽपि पशुपदमादाय दोषापत्तिर्यथा लोमवल्लाङ्गूलवात्पशुपदाद् बोद्धव्यः। तत्र लाङ्गूलानुयोगिकलोमप्रतियोगिकसमवायसंसर्ग आकाङ्क्षाभास्यो न भवति तस्य शक्तिभास्यत्वात्, प्रकृते चैकपदार्थतावच्छेदकं लाङ्गूलत्वं तदवच्छिन्नाप्रतियोगिता लाङ्गूलनिष्ठा तन्निरूपकः स्वेतरपदार्थतावच्छेदकम् लोमत्वं तदवच्छिन्ना प्रतियोगिता लोमनिष्ठा तन्निरूपकश्च संसर्गो वृत्तिभास्यः। परमित्थंभूतेऽपि एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गत्वरूपोद्देश्यतावच्छेदकस्य सत्त्वेऽप्याकाङ्क्षाभास्यत्वरूपविधेयस्याभावेन दोषापत्तिरुद्देश्यतावच्छेदकं नियमेन विधेये भासत इति नियमानाक्रान्तत्वात्।

एवं राज्ञो राजा राजराज इत्यादावेकपदार्थतावच्छेदकं राजत्वम् तदवच्छिन्नानुयोगिता राजनिष्ठा तन्निरूपकः स्वेतरपदार्थतावच्छेदकमुदासीनं किञ्चिद् यथा घटत्वं तन्निष्ठा प्रतियोगिता घटनिष्ठा न तन्निरूपकः संसर्गो भवति, यदवच्छिन्नप्रतियोगिताकः संसर्गः न तत्स्वेतरपदार्थतावच्छेदकम्। अतो राजराज इत्यादावाकाङ्क्षाभास्यत्वानापत्तिः।

एवं समवायेनाभावो नास्तीत्यत्र नञर्थाभावानुयोगिकोऽभावप्रतियोगिकः स्वप्रतियोगितानिरूपकः संसर्गो ह्याकाङ्क्षाभास्यो भवति, प्रकृते पदार्थतावच्छेदकेऽन्वयेक्तेपदार्थतावच्छेदकं नञर्थाभावत्वं तदवच्छिन्नानुयोगितानञर्थाभावनिष्ठा तन्निरूपकस्वेतरपदार्थतावच्छेदकं नाभावत्वं वक्तुं शक्यमभिन्नत्वानञर्थाभावरूपत्वादित्यर्थं; अतोऽन्यत्किञ्चिदु ग्राह्यं यथा

परत्वं तदवच्छिन्नाप्रतियोगिता पदनिष्ठा न तन्निरूपकः संसर्गो भवति । यदवच्छिन्नप्रतियोगितानिरूपकः संसर्गो न तत्स्वेतरपदार्थतावच्छेदकमतोऽभावो नास्तीत्यादावप्याकाङ्क्षाभास्यत्वान्नापत्तिः ।

अत एवोपस्थितीयविशेष्यताविशिष्टः संसर्ग आकाङ्क्षाभास्यः । वैशिष्टयञ्च स्वप्रयोज्यविशेष्यतानिरूपकत्वस्वनिरूपितत्वाभाववदुपस्थितीयविषयताप्रयोज्य प्रकारतानिरूपकत्वोभयसम्बन्धेन । तथा सति राज्ञो राजा राजराज इत्यादौ स्वस्वामिभावसंसर्गे यथा स्वमुपस्थितीयाविशेष्यता राजनिष्ठा तत्प्रयोज्या विशेष्यता शाब्दबोधीयाविशेष्यता राजनिष्ठा तन्निरूपकत्वस्वमुपस्थितीयाविशेष्यता राजनिष्ठा, तन्निरूपिताविशेषयता राजत्वनिष्ठा, अभाववदुपस्थितीया विषयता राजनिष्ठैव तत्प्रयोज्याप्रकारता, शाब्दबोधीया राजनिष्ठा, तन्निरूपितत्वमत एव स्वत्वसंसर्गस्याकाङ्क्षाभास्यत्वम् ।

एवमभावो नास्तीत्यादावपि स्वप्रतियोगितानिरूपकत्वसंसर्गस्याकाङ्क्षाभास्यत्वं यथा—स्वमुपस्थितीयाविशेष्यता नञर्थाभावनिष्ठा, तत्प्रयोज्याविशेष्यता शाब्दबोधीया विशेष्यता नञर्थाभावनिष्ठातन्निरूपिताविषयताऽभावत्वनिष्ठा । भाववदुपस्थितीया विषयताऽभावनिष्ठैव, तत्प्रयोज्या प्रकारता, शाब्दबोधीया प्रकारताऽभावनिष्ठा तन्निरूपितत्वमत एव स्वप्रतियोगितानिरूपकत्वसंसर्गस्याकाङ्क्षाभास्यत्वम् ।

न च अभावत्वप्रतियोगिकस्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्यासंग्रह एव । अभावपदजन्योपस्थितीयाऽभावत्वनिष्ठविषयताया नञ्पदजन्योपस्थितीयाभावनिष्ठविषयतानिरूपिताभावत्वनिष्ठविषयताभेदे मानाभावेनाभावनिष्ठविषयतानिरूपितत्वादिति वाच्यम् ।

अभावस्यैव स्ववृत्त्यभावत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नञर्थाऽभावेऽन्वयात् । स्वप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितवृत्तिज्ञानीयविषयता प्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपकत्वसम्बन्धस्य द्वितीयसम्बन्धस्थाने निवेशनीयत्वाच्च । अभावपदनिष्ठवृत्तिज्ञानीयविषय-

ताया नञ्पदनिष्ठवृत्तिज्ञानीयविषयताया निरूप्यनिरूपकभावविरहेणासंग्रहासंभवात्। न च समवायस्यैकत्वेन घट इत्यादौ विभक्त्यर्थैकत्वप्रतियोगिकाकाङ्क्षाभास्यसमवायादभिन्नस्य घटत्वप्रतियोगिकसमवायस्य वृत्तिभाष्यस्य संग्रहापत्तिः। एकत्वप्रतियोगिकसमवायस्योपस्थितीयविषयताविशिष्टत्वे घटत्वप्रतियोगिकस्य तस्य न तत्त्वमित्यस्य वक्तुं शक्यत्वादिति वाच्यम्। समवायस्यैकत्वे एकत्वप्रतियोगिकसमवाय आकाङ्क्षाभास्यः। घटत्वप्रतियोगिकसमवायोनाङ्क्षाभास्य इत्यस्यापि वक्तुमशक्यतयेष्टत्वस्यैवाङ्गीकरणीयत्वात्। न च घटत्वनिष्ठप्रकारतानिरूपिता समवायनिष्ठा संसर्गता आकाङ्क्षाप्रयोज्येति व्यवहारापत्तिः। तस्या घटपदनिष्ठवृत्तिप्रयोज्यत्वस्यैव सत्त्वेनेष्टापत्तेरयोगातः निरुक्तोपस्थितीयविषयताविशिष्टसंसर्गनिष्ठसंसर्गताया एवाकाङ्क्षाप्रयोज्यत्वादिति वाच्यमुपस्थितीयविषयताविशिष्टसंसर्गताकाङ्क्षाप्रयोज्येत्यत्र तात्पर्यात्। तत्र वैशिष्ट्यम् स्वप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितवृत्तिज्ञानीयविषयता प्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपितत्वोभयसम्बन्धेन। समवायस्यैकत्वेऽपि संसर्गतयोर्भेदेनाकाङ्क्षाप्रयोज्यत्वाप्रयोज्यत्वयोरूपपत्तेरिति दिक्।

घटादिपदात्पटाविषयकशाब्दबोधवारणाय तत्पदजन्यतद्विषयकशाब्दबोधं प्रति तत्पदजन्यतद्विषयकोपस्थितिः कारणं वाच्यम्। तेन घटपदात् पटोपस्थितेरभावान्न पटविषयकशाब्दबोधापत्तिः। परं शब्दगुणकमाकाशमिति व्युत्पत्त्या घटपदादेः समवायसम्बन्धेन सम्बन्ध्याकाशविषयकोपस्थितिबलादाकाशविषयकशाब्दबोधः प्रसज्येत तेन तसत्पदजन्यशाब्दबोधे तत्पदनिष्ठवृत्तिज्ञानाधीनाद्विषयकोपस्थितिः कारणम्। आकाशोपास्थितेर्घटपदनिष्ठवृत्तिज्ञानजन्यत्वाभावान्न शाब्दबोधजनकत्वम्। नीलो घट इत्यादावभेदादेर्घटादिपदनिष्ठवृत्तिज्ञानाधीनोपस्थित्यभावेन शाब्दबोधस्य च सत्त्वेन कारणभावे कार्योत्पत्तिरूपव्यतिरेकव्यभिचारः स्पादतोऽन्विताभिधानवादिभिरभेदावपि घटादिपदस्य शक्तिरङ्गीक्रियते। ते न चाभेदादेः पदार्थद्वयसंसर्गस्यादिवृत्तिज्ञानाधीनोपस्थितेः सत्त्वान्तव्यभिचारस्तन्मते। परमेवं विध कार्यकारणभावस्वीकारेऽपि घटादिपदाद्

घटविशेष्यकघटत्वप्रकारकस्येव घटप्रकारकघटत्वविशेष्यकशाब्दबोधस्यापि बाधकाभावादापत्त्यातत्पदजन्यतत्प्रकारकतद्विशेष्यकशाब्दबोधँ प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनतत्प्रकारकतद्विशेष्यकोपस्थितिः कारणम् । तथा-सति घटादिपदात् घटप्रकारकघटत्वविशेष्यकोपस्थितेरभावान्न तादृशो बोधः। इत्थञ्च पदार्थद्वयसंसर्गनिष्ठशाब्दबोधीयविषयता किञ्चिन्निष्ठ-प्रकारतानिरूपिताविशेष्यतानात्मकतया तादृशसंसर्गस्य वृत्तिज्ञानाधीनोप-स्थित्यभावेऽपि व्यभिचाराप्रसक्तया तत्र पदानां वृत्तिकल्पनमनुचितम् परन्तु नैयायिकमतेऽपि पदार्थद्वयसंसर्गभाननियामकाभावेन सर्वत्राबाधित-सकलसंसर्गभानसम्भवेन नीलो घटइत्यादावभेदादेरिव स्वत्वादेरपि भाना-पत्तिरिति शङ्कानिरासापस्वमते नियामकमुच्यते शब्दबोधेति ।

# महार्घरत्नान्युपनिषदस्तेषु वृहदारण्यकोपनिषत्

डा० कैलाशनाथ द्विवेदी

वर्तन्तेऽस्यां वसुन्धरायामनन्तरत्नानि दिव्यातिदिव्यानि। सृष्टेरादिकालादेव सुरासुरैः सागरमन्थनसमुद्भूतानि चतुर्दशदिव्यरत्नानि विख्यातानि किन्तु तेष्वपि त्रीण्येव महार्घरत्नानि प्रथितानि परमरमणीयपृथिव्यां जलमन्नं सुभाषितञ्चेति। भारतीये वाङ्मये मनीषिणां वैदिकमुनीनां सारभूता सुभाषिता वाणी किलोपनिषद्रूपे महार्घरत्नराशौ महत्त्वपूर्णा मन्यते मनीषिभिः। उपनिषदोऽभिप्राय एवं गृह्यते गौरवशालिभिः सुरेश्वराचार्यादिभिः सुधीभिः

अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः।
तत्रैव चास्य सद्भावादभिधार्थस्य तत्कुतः॥

उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते।
त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम्॥

उपनीयेममात्मानं ब्रह्माणास्तद्वयं यतः।
निहत्य विद्यां तज्जं च तस्मादुपनिषद्भवेत्॥

स० वा० ३-५

भारतीयतत्त्वविद्यायाः सारभूतानामुपनिषदां महार्घरत्नत्वमवधार्यैव सप्तदशमीय शताब्द्यां मुगलराजकुमारो दाराशिकोहो नाम पञ्चाशत उपनिषदामनुवादं पारसीकभाषायां कृतवान्। तन्मूलकमेव आंकेत्वेलदूपेरां नाम्नः फ्रांसविदुषा विहितं लेटिनभाषानुवादमधीत्य शर्मण्य (जर्मन) देशीयो नैराश्यवादी सुप्रसिद्धो दार्शनिकः शौपेनहावरः महार्घरत्नानामुपनिषदां भासाशान्वितो भूत्वा स्वकीयं विचारमेवं प्रकटितवान्

"In the whole world there is no study so beneficial and so elevating as that of upanisads. It has been the solace of my life, it will be the solace of my death."

वेदान्तदर्शनरत्नराशावनेका उपनिषद उपलभ्यन्ते श्रूयन्ते च। संख्या सुनिश्चिता नास्ति।

"ईशकेनकठप्रश्नमुण्डमाण्डुक्यतित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा॥"

इति महार्घरत्नभूता दशोपनिषदः प्रमुखाः मन्यन्ते मनीषिभिः। प्रमुखमासां प्रतिपाद्यं जगन्मूलतत्त्वं पत्तत्र सद्ब्रह्मात्मादिभिरनेकैः शब्दैरभिहितमस्ति। उपनिषदां प्रधानप्रतिपादनस्याङ्गरूपे सहकारिरूपे वा तत्र जीवस्वरूपं सांसारिकी तस्य स्थितिर्ब्रह्मजीवयोः सम्बन्धो, ब्रह्मप्राप्तिप्रकारो ब्रह्माप्राप्तिसाधनानि ब्रह्मप्राप्तिप्रतिबन्धकानि, जगतसृष्ट्यादिविषयाणां विलक्षणं विवेचनं प्रतिपादनञ्च वर्तते। सहैवानेन तत्र गौणरूपे ब्राह्मणारण्यकप्रभावितानामपि विषयाणां वर्णनमस्ति।

उपनिषदां महार्घरत्नराशौ भास्कर इव भास्वरो भाष्यकारः श्री शङ्कराचार्यः यद्यप्येकादशोपनिषदां भाष्यरचनामकरोत्। तथापि बृहदारण्यकोपनिषदः स यामतिविपुलभाष्यरचनां कृतवांस्तद् द्वारा तेन समग्रवेदराशिरहस्यस्यैवोद्घाटनं कृतम्।

बृहदारण्यकोपनिषद्[1] विद्यतेऽष्टाध्यायेषु। प्रथम द्वितीयाध्यायौ प्रवर्ग्यकर्माङ्गभूतौ, ययोः कर्मकाण्डद्वारा ज्ञानस्यापि सम्बन्धः सम्यग्रूपेण निरूपितः। तृतीयचतुर्थाध्याययोर्मधुविद्याया आचार्यवंशस्य च वर्णनम्। पञ्चमषष्ठाध्यायौ मुनिकाण्डस्य याज्ञवल्क्यस्य वा नाम्ना सुप्रसिद्धौ। अनयोर्जल्पकथाया वादकथाया वा रूपे मधुविद्याया विस्तरः कृतः। सप्तमाष्टमाध्याययोर्नाम खिलकाण्डः। अस्मिन् श्रीमन्थपुत्रमन्थाद्युपासनानां, पूर्णोपनिषद आचार्यवंशस्य च वर्णनं वर्तते। इत्थं बृहदारण्य-

१. बृहदारण्यकोपनिषद्, सं० श्रीराम शर्मा, बरेली प्र० संस्करणम्, १९६२

कोपनिषत् सर्वोपनिषत्सु शब्दरूपेण अर्थरूपेण चापि बृहत्त्वाद् बृहद्विशेषणं भजते। अरण्येऽध्ययनात् सत्यमेवेयं बृहदारण्यकोपनिषत् कथ्यते।

सम्पूर्णबृहदारण्यकोपनिषदर्थोऽयं यद् यथोक्तमात्मानमभयब्रह्मरूपे यो विजानाति, सोऽभयब्रह्मैव भवति—अर्थमिमं हृदयंगमायोत्पत्तिस्थितिप्रलयादीनां परिकल्पना कृता। आत्मनि च क्रियाकारकफलादीनामप्यध्यारोपः क्रियते। उपनिषदि विद्याविद्ययोरपि वर्णनमेवं वर्तते

**"अथ यत्रैनं घ्नन्तीव, जिनन्तीव, हस्तीव विच्छाययति, गर्तमिव पतति, यदेव जाग्रद् भयं पश्यति, तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते, सोऽस्य परमो लोकः।**

(बृह० उ० ४।३।२०)

स्वप्नावस्थायां ज्ञातृज्ञानज्ञेयानां क्रियाकारकफलानां वा वास्तविको विभागो न वर्तते। सर्वमिदं वासनाया असत्यक्रीडाया भ्रान्तेर्वा विलासमात्रं भवति। वासनाविनिर्मुक्ता विवेकिनो ब्रह्मज्ञानिनो ब्राह्मणा आत्मानं साधनफलस्वभावाद्रहितं ज्ञात्वा सर्वैषणाभ्यः ऊर्ध्वंगतय आसन्। एषामेवं परिचयः प्रदत्तो बृहदारण्यकोपनिषदि—**"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च मौनं च निर्विद्याऽथ ब्राह्मणः। (बृ० उ० ३।५।१)**

वेदान्तदर्शनग्रन्थेषु शिरोमणीभूते बृहदारण्यकोपनिषदि वासनानां साम्यं हरिद्रारागेण समं कृतं, किन्तु काठकमुण्डकाद्युपनिषत्सु वासना ग्रन्थिरूपे वर्णिता। वस्तुतः वासनैपूर्वप्रज्ञारूपे जन्मनिमित्तं प्रतिपादितास्यामुपनिषदि। एवं—**"त विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च।"**

बृहदारण्यकोपनिषदो मान्यतेयं यद्यदा जीवात्माऽयं परलोकं गच्छति, तदा विद्याकर्मपूर्वप्रज्ञाश्च तमनुगच्छन्ति। बृहदारण्यकोपनिषद उद्गीथब्राह्मणे यजुर्वेदस्यास्य प्रसिद्धमन्त्रस्योल्लेख एवं कृतः **"तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय।"** मन्त्रेऽस्मिन् प्राप्यंवस्तु सज्ज्योतिरमृतमुक्तं, त्याज्यं वस्त्वसत् तमो मृत्युश्च कथितम्।

वृहदारण्यकोपनिषद् वेदान्तस्य वैशिष्ट्यपूर्णं सारभूतमुपदेशमेवं वर्णयति—

(१) **"तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्मसर्वानुभुः इत्यनुशासनम्।"** (वृहदारण्यकोपनिषद् ४।५।१९)

(२) **स वा एष महानज आत्मा अजरोऽमरोऽमृतोऽभयो ब्रह्म अभयं वै ब्रह्म अभयं हि वै ब्रह्म भवति, य एवं वेद।** (वृ० उ० ६।४।५)

(३) **अशीर्यो न हि शीर्यति, असंगो न हि सज्यते, असितो न हि व्यथते न रिष्यति** (वृ० उ०)

(४) प्रपञ्चभूतं जगत् चिदात्मनः पृथक् रूपं नास्ति। नानानामरूपात्मकमिदं जगत् चिद्वस्तुनो ग्रहणं विना गृहीतं न भवति।[२]

(५) ब्रह्मात्मनोरेकत्वं व्यापकतात्त्विकपृष्ठभूमौ इत्थं निर्दशितमस्ति वृहदारण्यकोपनिषदि—

**"अयमात्मा ब्रह्म।" "विज्ञानमानन्दं ब्रह्म।" 'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।"**
(वृ० उ०)

(६) यदा ब्रह्मात्मैक्यविद्यया अविद्यायाः निवृत्तिर्भूत्वा जगतः आत्यन्तिकप्रलयो भवति, यो मोक्षः कथ्यते, तदाऽद्वितीयात्मनोऽतिरिक्तस्य कस्यचित् पदार्थस्य यथार्थताऽसम्भावितैव। अतएव वृहदारण्यकोपनिषदो गर्जनेयमस्ति—**"अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा।** (वृ० उ०)

---

२. द्रष्टव्यः "गम्भीरचिन्तन" ग्रन्थः, सं० स्वामी अखण्डानन्द सरस्वती वृन्दावन। नयी दिल्ली-२६, १९८० प्रथम संस्करणम्, पृ० १०२७-१०६ श्रीस्वामिनां सच्चिदानन्देन्द्रसरस्वतीनां "शांकरभाष्य—एक अध्ययन" शीर्षकः, श्रीस्वामिनोऽखण्डानन्दसरस्वतीनां "वृहदारण्यक—एक दृष्टिः" इति शीर्षकश्च शोधलेखौ (वृहदारण्यकोपनिषदः विशेषसन्दर्भे), पृ० २७-१०६

(७) दुर्लभब्रह्मविद्यया सर्वं द्वैतमात्ममात्रं भवति, द्वैताभावे क्रिया-कारकफलादिविभेदस्य सम्भावना नैव भवति—**"यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत, तत्केन पश्येत् ?** (बृ० उ० ६।४।१५)

वस्तुतोऽविनाशिन आत्मनो ज्ञानस्य प्रक्रियाऽस्ति नेति नेति। सोऽस्त्यगृह्योऽशीर्योऽसंगोऽसितो व्यथाव्ययमुक्तश्च। **"अहं ब्रह्मास्मि"** ज्ञानमिदममृतस्य साधनम्। अविद्यानिवृत्या[३] उपलक्षित आत्मैव मोक्षः **"आत्मेत्येवोपासीत्"** इत्यनुभूत्या ब्रह्मज्ञानस्योपक्रमो भवति, ज्ञानेन अज्ञानस्य निवृत्तौ, नित्यप्राप्तेः प्राप्तिरिव भवति। यथा भ्रान्त्या विलुप्त-कण्ठहारो भ्रान्तिनाशे प्राप्त एव प्राप्यते, तथैव आत्मनः पूर्णताऽद्वितीयतैव बृहदारण्यकोपनिषदो निरुत्तरः परिपूर्णः सर्वस्वीकार्यश्च सिद्धान्तः।

संक्षेपे, लेखस्योपसंहारे कथयितुं शक्यते, यत् साम्प्रतं लोके साम्प्र-दायिकतासीमनाय न केवलं राष्ट्रियैकतार्थमुपतिषदां प्रासंगिकताऽनुभूयते-ऽपितु विश्वशान्तिलाभाय विश्वबन्धुत्वभावनावर्धनाय चासां **"नेह नानास्ति किञ्चन"**[४] इत्युद्घोष सिद्धान्ततो व्यवहारतश्च स्वीकरणीयः समाचारणीयश्चेति शम्।[५]

---

३. बृहदारण्यकोपनिषत् ४।३।७।
स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव
स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि॥

४. तुलनीयम् यजु० ४१.६-७, ईशोः
यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति॥
यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥

५. आकाशवाण्याः लक्ष्मणपुर (Lucknow)—केन्द्रात् संस्कृतकार्यक्रमे लेखकस्य (दि० ४।६।१९८८ दिनाङ्के प्रसारिता वार्ता उदारचरितानां तु वसुधैव कुटुम्बकम्", तथा १३।१२।८८ दिनाङ्के प्रसारिता "महार्घरत्नानि उपनिषदः—बृहदारण्यकोपनिषत्" इति संस्कृतवार्ताकारेण प्रस्तुतोऽयं शोधलेखः।

# व्याकरणदर्शने विवर्तः परिणामो वा

**सुबोध शर्मा**

दृश्यते (आत्मतत्त्वं, ब्रह्मतत्त्वं, शब्दतत्त्वं वा) विचार्यते=बोध्यते येन तद्दर्शनम् । ब्रह्मविचारसाधकतमं यत्तद्दर्शनपदव्यपदेश्यं भवतीति फलितोऽर्थः । शास्त्रपदेनाऽप्येतदेवोच्यते—शिष्यते=अनुशिष्यते हितमुपदिश्यतेऽनेनेति शास्त्रमिति व्युत्पत्तेः । योगरूढ्याश्रयणेन चाऽऽत्मतत्त्वाऽवबोधकं शास्त्रं दर्शनमिति फलति । तच्च दर्शनमास्तिकनास्तिकभेदभिन्नं सन्नानाविधम् । तत्र च व्याकरणशास्त्रमपि भवत्यास्तिकदर्शनम् । तथा च श्रुतिः—

**दृष्ट्वारूपे व्याकरोत् सत्याऽनृते प्रजापतिः ।**
**अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः[1] ॥**

अस्यार्थः—प्रजापतिः वैयाकरणः शब्दोपादानकसृष्टिविधाता संश्लिष्टे सत्याऽनृते पृथक्कृत्य सत्ये=परमार्थभूते वस्तुनि श्रद्धामसत्येऽनात्मनि चाश्रद्धां कुर्यादिति ।

दर्शनान्तराणामप्ययमेवोद्घोषो यथैतत् सत्यमन्यत् सर्वमसत्यम्, "ब्रह्म सत्यं जगन्मिथ्या" इति वेदान्तसिद्धान्तवदिहापि शास्त्रे परमार्थः सूक्ष्मपश्यन्तीरूपं पराख्यं शब्दब्रह्मैव सत्यम् । अन्यत् सर्वमसत्यमिति । यथा दर्शनान्तरे सत्यप्राप्तये नानोपायवर्णनं, तथेहाऽपि शब्दसाधुत्वप्रक्रियाप्रदर्शनं सत्यप्राप्त्यर्थमेव । तदुक्तं हरिणा—

**उपायाः शिक्षमाणानां बालानामुपलालनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते[2] ॥** इति ।

---

१. शुक्लयजु० सं० १९।७७
२. वा० प० २।२३८

तत्रैतावान् विशेषः—अन्येषां दर्शनानां लौकिकं फलं नास्त्येव। अस्य पुनः व्याकरणस्य दर्शनस्य त्वैहिकाऽमुष्मिकोभयविधफलप्रसाधकत्वम्। अत एतद्दर्शनं मन्दबुद्धीनां बालानां शब्दसाधुत्वप्रक्रिया-जिज्ञासूनां, प्रखरबुद्धीनां शब्दब्रह्मजिज्ञासूनां पण्डितानाञ्चोपकारकं भवति।

श्रुत्यन्तराण्यपि व्याकरणस्य दर्शनत्वे प्रमाणम्—"शैलिनिरब्रवीद् वाग् वै ब्रह्म[३]" "वाग्घि ब्रह्म[४]" "वाग् वै सम्राट् परमं ब्रह्म[५]" "ते मृत्युमतिवर्तन्ते यो वै वाचमुपासते[६]" "वाग्ब्रह्म[७]" "यत्र वा वाग् तद्ब्रह्म इत्येतदुक्तं भवति[८]" इत्यादयः। अतो नैतद्दर्शनमाधुनिकोत्प्रेक्षितमिति ज्ञेयम्। अत एव चाऽऽभिः श्रुतिभिः शब्दब्रह्मवादोऽपि समर्थितो भवति।

अपि च श्रुतिषु वाचः सर्वोपादानत्वं सर्वभोक्तृत्वं सर्ववक्तृत्वं सर्वद्रष्टृत्वञ्चोपवर्णितमस्ति। तथाहि—

**वागेवार्थं पश्यति वाग्ब्रवीति,**
**वागेवार्थं निहितं सन्तनोति।**
**वाच्येव विश्वं बहुरूपं निबद्धं**
**तदेकदेकं प्रविभज्योपभुङ्क्ते॥[९]**

**वागेव विश्वा भुवनानि जज्ञे**
**वाच इत् सर्वममृतं यच्च मर्त्यम्।**
**अथेव वाग् बुभुजे वागुवाच**
**पुरुत्रा वाचो न परं यच्च नाह[१०]** ॥ इति।

३. बृ० उ० ४।१।२
४. ऐ० ब्रा० २।२५
५. ऐ० ब्रा० २।२५
६. उद्धृ० पा० या० प्रमाण समीक्षा पृ० ७
७. गो० ब्रा० २।२०
८. ऐ० आ० १।५।२
९. वा० प० १।१२० स्वो० वृ०
१०. वा० प० १।११८ स्वो० वृ०

एवञ्च वैयाकरण-निकाये शब्दब्रह्मैव सर्वजगदुपादानमिति प्रसिध्यति। तत्र जगतः शब्दमयत्वं किं शब्दपरिणामत्वनिबन्धनमुत शब्दादुत्पत्तिनिबन्धनमुताहो शब्दविवर्त्तत्वनिबन्धनमिति जिज्ञासायामुच्यते—जगतः शब्दमयत्वं शब्दब्रह्मविवर्तत्वनिबन्धनमेव। तदुक्तं वाक्यपदीयकारेण—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥**[11] इति

श्रीमद्भट्टोजिदीक्षितश्चाह

**श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।**
**स्फोटरूपं यतः सर्वं जगदेतद् विवर्तते ॥**[12] इति

सर्वं दरीदृश्यमानं जगत् तस्मादनादिनिधनाच्छब्दब्रह्मणोऽर्थभावेन विवर्तत इति संक्षिप्तार्थः।

विवर्त्तलक्षणञ्चोक्तं स्वयं वृषभदेवेन "एकस्य तत्त्वादप्रच्युतस्य भेदाऽनुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्त्तः, स्वप्नविषयप्रतिभासवत्[13]" इति। तत्त्वात्=स्वरूपाद प्रच्युतस्यैकस्य शब्दब्रह्मण आरोप्ये स्वभेदप्रतिभासपुरःसरं योऽसत्यस्याधिष्ठानविभागेन च प्रतीयमानस्यारोप्यस्य धर्मोपग्रहः स विवर्त्तः। स्वप्ने यथैक एव विज्ञानात्मा विभिन्नपदार्थरूपेणाऽवभासते, किन्तु विज्ञानात्मा न भिद्यते तथा स्वीकार उत्थितस्य पुरुषस्य स्मरणाऽनुत्पत्तिः स्यात्। तद्वच्छब्दाख्यं ब्रह्मापि स्वरूपहानरहितं सत् स्वकालाख्यशक्त्या नानारूपेण प्रतिभासते।

यथा चैकस्य सूर्यस्य नानावापिकूपतडागादिषु प्रतिबिम्बनं न नानात्वप्रयोजकं, तथैकस्य नित्यस्य शब्दब्रह्मणो नानाकारेण विवर्त्तनमपि

११. वा० प० १।१
१२. वै० मतो का० १
१३. वा० प० १।१। स्वो० वृ०

न नानात्वप्रयोजकम् । कार्यशब्दस्तु नाना । शाब्दिकैर्भेदसहिष्णोरभेदस्य स्वीकारात्, नित्यकार्यशब्दयोरौपाधिकभेदभिन्नत्वस्वीकाराच्च कार्य-शब्दानां नानात्वेऽपि न नित्यस्य नानात्वशङ्का ।

जगतः शब्दविवर्त्तत्वस्वीकारादेव घटादिपदार्थानामपि शब्दात्म-कत्वमवलम्ब्य नित्यत्वं स्यादिति शङ्कोच्छेदोऽतात्त्विकान्यथाभावस्यैव विवर्त्तपदार्थत्वात् ।

यद्यपि—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ॥[14]

इत्यत्र कारिकायां भर्तृहरिराचार्यः संसारोऽयं शब्दस्य परिणाम इति प्रत्यपादयत् "अनादिनिध नं ब्रह्म"[15] इत्यत्र तु विवर्त्तवादं समर्थित-वान् । विवर्त्तपरिणामयोश्च भेदो महान् उभयो र्विरोधो भूयान् । यतो ह्युपादानसमसत्ताककार्यापत्तिः परिणामः । उपादानविषमसत्ता-ककार्यापत्तिर्विवर्त्तः ।

अयं भावः—सत्ता त्रिधा भवति—पारमार्थिकी व्यावहारिकी प्रातिभासिकी च । तत्र पारमार्थिकी त्रिकालाऽबाध्यत्वरूपा सत्ता ब्रह्मणः व्यावहारिकी सम्पूर्णस्य दरीदृश्यमानस्य जगतः प्रातिभासिकी तु शुक्तौ रजतादेः ।

दुग्धस्य दधिभवनं परिणामः । दुग्धस्योपादानस्य दधिरूपकार्यस्य चोभयस्य व्यावहारिकसत्वादुपादानसमसत्ताकार्यापत्तेः सत्त्वात् । शुक्तिकाया रजतभवनं विवर्त्त उपादानशुक्तिकाया व्यावहारिकसत्वात्, कार्यस्य रजतस्य च प्रातिभासिक सत्वादुपादानविषमसत्ताककार्या-पत्तिसद्भावात् । एतदेव वेदान्तसार इत्थं प्रदर्शितम्—

१४. वा० प० १।१२०
१५. वा० प० १।१

अतत्वतोऽन्यथाप्रथा विवर्त्तं इत्युदीरितः ।
सतत्वतोऽन्यथा प्रथा विकार इत्युदीरितः ।,[१६]

यदि च

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथमं विश्वमेतद् व्यवर्तत ॥[१७]

इत्युक्त्या पुराकाले विवर्त्तं परिणामयोः साङ्कर्यमासीदिति गम्यते । अत एव शान्तरक्षितस्तत्व संग्रहे "अनादिनिधनमिति" कारिकामर्थतोऽनुवदन् विवर्त्तपदमपाय परिणामशब्दं प्रयुङ्क्ते स्म

नाशोत्पादसमालीढं शब्दब्रह्ममयञ्च यत् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ॥[१८] इति

भगवान् शङ्कराचार्योऽपि विकारार्थे"विवर्तते" इति पदं प्रयुक्तवान् —"यत्तत्सुखदुःख······स्वभावेनैव विकारात्मना विवर्तते"

महाकविर्भवभूतिः परिणामार्थे विवर्त्तपदं प्रयुङ्क्ते—

एकोरसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्त्तबुद्बुद्तरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव हि तत्समग्रम् ॥[२०]

जलस्य बुद्बुद्तरङ्गाणाञ्च व्यावहारिकसत्त्वे नोपादानसमसत्ताकं कार्यपत्तिसत्त्वेन जलस्य परिणाम एव तत्सर्वं, किन्तु "विवर्तान्" इति प्रयुक्तम् ।

१६. वे० सा० अपञ्चीकृत प्रक०
१७. तत्त्वसंग्रहश्लोक १२८
१८. शां० भा० २।२।१
१९. उत्तरराम० ३।४७
२०. वा० प० १।१२०

एवञ्च परिणामविवर्तयोः साङ्कर्याऽवलोकनात् कतरस्मिन् पक्षे हरिपादानां तात्पर्यमिति चेदत्रोच्यते—हेलाराजादिव्याख्यानेन शब्दब्रह्म-विवर्त्तवाद एव हरीणां तात्पर्यमिति । अत एवानादिनिधनकारिका-व्याख्यानाऽवसरे स्वोपज्ञवृत्तौ पूर्वोक्तं विवर्त्तलक्षणं लक्षितं, न पुनः "शब्दस्य परिणामोऽयम्" इत्यत्र परिणामलक्षणं कृतम् ।

किञ्च "शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः" इति वाक्य-स्यायमर्थः—अयं सर्वोऽपि वाच्यवाचकभेदभिन्नः संसारः शब्दस्य सूक्ष्मवा-क्तत्त्वस्य परिणाम इत्याम्नायविदो वेदविदो विदुर्जानन्ति, न तु वयं वदामः । अतः प्रथमं सर्गादावेतत् सर्वं विश्वं छन्दोभ्य एव व्यवर्त्तत । अत्र छन्दःपदेन लक्षणया सूक्ष्मं वाक्तत्त्वं गृह्यते नित्यशब्दत्वरूपच्छन्दः-साधर्म्यात् । यत्र मते वेदस्यानित्यता, तत्र वेदस्य मन्त्ररूपस्य सूक्ष्मवाक्-कार्यत्वेन कार्यकारणयोरभेदो बोध्यः ।

तदेवं व्याकरणदर्शनेऽपि विवर्त्तवादः स्वीक्रियते, किन्तु नाऽयम-द्वैतवेदान्तप्रक्रियास्वीकृतविवर्त्तेन सर्वथा समानः । यतो हि वाक्यपदीये तस्य शब्दब्रह्मणः स्वातन्त्र्यशक्तिः कालः स्वीक्रियते । तदुक्तम्—

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।**
**जन्मादयो विकारा षड् भावभेदस्य योनयः ॥**[21] इति

कालेनानुज्ञातौ जन्मादयो विकारा जायन्ते । अन्याः सर्वाः शक्तयः कालपरतन्त्रा भवन्ति । न हि वर्षतौ गोधूमोत्पत्तिः क्रियते कयाचिदपि शक्त्या । तथैव वसन्तेऽज्ञातः कोकिलः कुहूशब्दं करोति, न हेमन्ते । वैया-करणनये हि शक्तिशक्तिमतोश्चैक्यं स्वीक्रियते । कालाख्यशक्तावारोपित-भेदो न वास्तविकः । कालशक्तिविषये कालसमुद्देशे तृतीयकाण्डे वाक्य-पदीये विशेषेणोक्तं हरिपादैः ।

एवञ्च ब्रह्मैव स्वशक्त्या स्वस्मिन् भेदमवभासयति । किञ्चैवं प्रतीयते भर्तृहरिसमये व्युपसर्गपूर्वाद् वर्त्तमानाद् वृतुधातोर्घञन्तान्निष्पन्नस्य

२१. वा० प० १।३

विवर्त्तशब्दस्य विलक्षणतयाद्भुततया विशेषरूपेण विपरीतया वर्त्तनमिति विग्रहाऽनुसारेण यौगिकार्थं गृह्यते। तदुक्तम् हेलाराजेन—"अनेकभाव-ग्रामरूपतया चाद्भुततया वृत्या विवर्त्तनात्"[२२] इति "न च परिणति-दर्शनाऽभिप्रायोऽयं विकारशब्दोऽनित्यत्वप्रसङ्गादपितु विवर्तपर्यायोऽयम्"[२३] इति सैव भावविकारेष्विति कारिकां टीकमानो हेलाराजः।

अथ शब्दब्रह्मणः कया रीत्या संसारोऽयं विवर्त्त इति चेदत्रोच्यते—सृष्ट्यादावनादिनिधनं सर्वग्राह्यग्राहकाकार वर्जितं परवाग्रूप (सूक्ष्मपश्य-द्वाग्रूपं) शब्दब्रह्मसृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतमपरिमित-शक्तिसहितं सज्ज्ञानरूपात्मकं सकलं प्रपञ्चं प्रथमं बुद्धावाकलय्य विरा-जते। तदा संकल्पयति "एकोऽहं बहु स्यां प्रजायेय" इति। तदनन्तरं स्व-कीयया कालाख्यया स्वातन्त्र्यशक्त्या सहितोऽपञ्चीकृतानि भूतानि क्रमेणा-काशादीनि तन्मात्रवाच्यानि ततश्च नामरूपात्मकं जगदिति।

तदेवं व्याकरणशास्त्रमपि दर्शनं, यत्र च शब्दब्रह्मवादे विवर्त्तवाद-श्च राजते। नामरूपात्मकोऽयं संसारः शब्दाख्यस्य ब्रह्मणो विवर्त्त एव न तु परिणामः। तथा स्वीकारे 'तात्त्विकाऽन्यथाभाव परिणाम इति शब्द-ब्रह्मणोऽनित्यता स्यात्। नहि दुग्धं दधिरूपेण परिणमत् पुनः दुग्धरूपता-मेति। इह तु पर्यन्ते शब्दब्रह्मैव शिष्यते। तदुक्तं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"[२२] इति। शब्द एव च सर्वेषां पदार्थानां कारणम्। न हि तादृशं किमपि ज्ञानं यत्र शब्दो न भासते। तदुक्तम्—

**न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते।[२३]**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥** इति।

२२. वा० प० ३।३।३६
२३. छां० उ० ६।२।३
२४. उद्धृ० वा० प० १।१। अन्वाक०
२५. वा० प० १।१२३

# कालिदासवर्णितव्रजस्थलानि

—आचार्या मीरा शास्त्री

परमनिकृष्टापि कस्यापि जननी जन्मभूमिर्वा तस्मै गरीयसी परमप्रिया च भवति। यो जनो यावान् संवेदनशीलस्तावनेवैतस्यामनुरागस्तस्य प्रचुरतरः परिलक्ष्यते। मानवहृदये सरसकविहृदयं सर्वाधिकं संवेदनशील-मतोऽस्य विश्वस्य प्रायः सर्वे कवयः स्वकीयेसूच्चकोटिकाव्येसु येन केनापि रूपेण मातृभूमेर्महिममयगीतिमगायन् धन्यास्ते भारतस्य भूभागा येषां प्रकृतेश्चारुविलासाः कस्य सहृदयस्य हृदयं नावर्जयन्ति। पुनः कविता-कामिनीकान्तः भारतीयसंस्कृतेरूपासकः कविकुलगुरुकालिदासः स्वमातृ-भूमेर्गौरवगाने पश्चात्पदः कथं स्यात्? भव्यभावभरितस्य भारतीपुत्रस्य तस्य दृष्टि विशालासीत्। अतः स्वकीयासु काव्यरचनासु कस्यापि क्षेत्र-विशेषस्य वर्णनमविधायाखण्डं भारतवर्षं वर्णितवानसौ। अस्य सरसका-व्यग्रन्थावलोकनेन विचारोऽयं दृढतामापद्यते, यत् राष्ट्रकवेरात्मा भारत-भुवः कणे कणे रेमे। भारतभूमेर्वनोपवनानि, सरसीसरितः, पशुपक्षिणः, महीधरमहीरुहाः, नानानदीनदाश्च सौन्दर्येण तं संमोहयन्ति।

हिमवद्विन्ध्यकुण्डलाया भारतभुवो वर्णनं कुमारसंभवरघुवंशमेघ-दूतादिग्रन्थेषु कृतवान् कविः। तत्र रघुवंशे रघुदिग्विजयप्रसंगे भारतस्य सीमाप्रान्तानां नैसर्गिकसौन्दर्ये रमते कालिदासस्य मानसमन्यत्रेन्दुमती-स्वयंवरस्थले भारतीयजनपदेष्वपि विहरति! अत्र भारतदर्शनसन्दर्भे लीलापुरुषोत्तमस्य भगवतः कृष्णस्य लीलाभूमिं व्रजवर्णनं विहाय सः कथमग्रे सर्तुं शक्नोति? तद्वर्णनं विना तु भारतदर्शनमपूर्णमेव। महाकविः पुराणेषूल्लिखितं शूरसेनं' व्रजक्षेत्रं वा वर्णयति सन्दर्भानुसारं रघुवंशे।

कालिदासीयव्रजवर्णनात् प्रागस्य व्रजस्य व्युत्पत्तिर्विचारणीया भौगोलिकीस्थितिरपि चिन्तनीया व्रज् गतौ धातोरच् प्रत्यये कृते निष्पद्यते "व्रज" शब्दो[1] गतिशीले। व्रजन्ति गावोऽस्मिन्निति कोशकारैः[2] शब्दस्यार्थत्रयं प्रतिपादितम् गोष्ठमार्गः वृन्दं चेति। एतैरपि गोसम्बन्धिस्थानस्यावबोधः संजायते। आर्यावर्त्तस्य मध्यदेशस्य वा पुरातनषोडश[3] महाजनपदेषु व्रजक्षेत्रीयं शूरसेनं[4] प्रमुखमासीत्। श्रीमद्भागवतेऽस्य उल्लेख एवं प्राप्यते—

**"व्रजे वसन् किमकरोत् मधुपुर्यां केशवः?"**

भागवत १०।१०।१०

**शूरसेनो यदुपतिर्मथुरामावसन् पुरीम्।**
**माथुराञ्छूरसेनांश्च विषयान् बुभुजे पुरा॥**

श्रीमद्भागवत १० पूर्वार्धं १।२७

मथुरा, तदन्तिकस्थभूभागाश्च प्राचीनकालादेव स्वकीयैर्महाकान्तारैर्विस्तृतगोष्ठैः शोभनद्रोग्धीगोभिश्च विख्याताः। कृष्णस्याविर्भावो यद्यपि मथुरायामेव संजातस्तथापि राजनीतिकारणैः जनिकालादेव पारेयमुनं नन्दगोपगृहे संन्निवेशितः। तदा गोपा गोपकुलानुकूलासु समीपवर्तिनीषु मथुरायां गोचरभूमिषु विचरन्ति स्म। कृष्णोऽपि तैः सहैव

---

१. श्रीमद्भागवते १०।१।६, १०, १२, २७
विष्णुपुराणे ४।६।१८, २४, २५, २६ प्रभृतिस्थलानि

२. अमरकोशे—३।३० 'गोष्ठाध्वनिवहव्रजः'

३. महाभारते, भीष्मपर्वणि—तत्र मे कुरुपञ्चालाः शाल्वाः······शूरसेनकाः।
मनु० २।१६ कुरुक्षेत्रं च मत्याश्च पच्चालाः शूरसेनकाः

४. D. C. Sircār—"Sūrsena is one of 16 Mahaā Janpadas. The sursenas were a branch of yadavas and lived about Mathura. I. H. Q. Vol. XVI P. 30
विष्णुपुराणे ४।१५।२६ आनक दुन्दुभेर्देवक्यां कीर्तिमत् सुषेणो······

गाश्चारयामास, तेन मथुराया गोचरभूमीनामपि महिमावर्धत्। कृष्णस्याविर्भावसम्बन्धि समस्तं लीलास्थलं व्रजशब्देन व्यवह्रियते स्म। साम्प्रमपि समस्तशूरसेनजनपदीयभूभागः व्रजशब्देनैव प्रथितोऽस्ति। एवं वर्तमानव्रजक्षेत्रमेव प्राचीनमथुरामण्डलस्य शूरसेनप्रदेशस्य चापरं नाम लघुरूपञ्च। क्षेत्रेऽस्मिन् मथुरावृन्दावनगोवर्धनगोकुलमहावननन्दग्रामवृषभानुपुरडीगकाम्यकवनादीनि क्षेत्राणि वर्तन्ते। सम्प्रति व्रजक्षेत्रं चतुरशीतिक्रोशव्यापि। अस्य समग्रस्य भूभागस्य मधुवनसहितः शूरसेनप्रदेशो मधुरा मथुरामधूपघ्नञ्चेति पुरातननामानि दधाति।

महाभारतकाले शूरसेन एकः शक्तिसम्पन्नो नरेश आसीत् तस्याभिधानं संधार्य शूरसेनजनपदस्य सीमा डा० कैलाशनाथ द्विवेदी प्रभृत्यनुसन्धानकारैवं[५] निर्धारिताः प्राच्याम्—पञ्चालप्रदेशः। प्रतीच्यां—ब्रह्मावर्त्तः, मध्यदेशश्च, उदीच्यां—कुरुजनपदं (वर्तमानमेरठस्यासन्नक्षेत्रम्)।

अवाच्याम्—चर्मण्वती (चम्बल) नदी, विराटराज्यं मत्स्यप्रदेशश्च)।

कविकुलगुरुणा कालिदासेनेन्दुमतो स्वयम्बरे सुषेणपरिचयप्रसङ्गे शूरसेनराज्यं तत्सम्बन्धीनि कतिपयानि[६] व्रजक्षेत्राण्युल्लिखितानि। अस्य अस्य जनपदस्याधिपतिः सुषेणः स्ववंशदीपो लोकान्तरगीतिकीर्तिराचार[७]

---

५. D. C. Sircar, Studies in the geography of Ancient & Medi India Delhi, 1960, p. 130
N. L. Dey; Geographical Dictionary of Anciənt India Calcutta 1930, p. 34
द्रष्टव्यः डॉ० कैलाशनाथद्विवेदिनः शोधग्रन्थः
"कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान", कानपुरम्, प्रथम संस्करणम्, १६६६, पृ० १६६-१७०

६. रघुवंशे ६।४५ सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम्।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी॥

७. रघु० ६।४६, ४७

शुद्धश्चाऽऽसीत् कालिदासमतानुसारं, किन्तु पुराणेष्वस्य[८] प्रसिद्धिर्न वर्तते तादृशी शूरसेनवृष्णिवंशीयराज्ञां मध्ये । कविवर्णनेनैतत्प्रतीयते यच्छूरसेनप्रदेशस्य प्रधाननगरी राजधानी वा मधुरा (मथुरा) एवाऽऽसीत्, या यमुनाकूलेऽवस्थिता, यत्रावरोधवनिता वारिविहारं कुर्वन्ति स्म[९] रघुवंशेपञ्चदशेसर्गे लवणासुरवधार्थमयोध्यातो निर्गतो रिपुदमनो मधूपघ्नं प्रविशति । अथ कलिकुलगुरुर्वर्णयति, यल्लवणासुरं निहत्य सः कालिन्द्या उपकूलं मधुरां निर्ममे या स्वर्गस्योपनिवेश इव आस्ते । मधुरायाः शासनव्यवस्थां सुबाहौ निक्षिप्य सोऽयोध्यां प्रत्यागच्छत् एवमस्मिन् सर्गे महाकविना मथुरास्थाने "मधुरा"[१०] शब्दस्य प्रयोगो विहितः । वाल्मीकिरामायणेऽपि[११] विविधस्थलेषु मधुराया मधुपुरं, मधुरेति नामोल्लेखो वर्तते, यानगरी लवणासुरवधानन्तरं शत्रुघ्नेनैव स्थापिताऽऽसीत् । इन्दुमतीस्वयंवरात् स्थलेऽस्मिन् कश्चिद् विरोधः संलक्ष्यते । अत्रलवणासुरवधानन्तरं शत्रुघ्नेन नवीना नयनाभिरामा नगरी निर्मिता । षष्ठे सर्गे-मथुरा शत्रुघ्नात्प्रागेव स्थापिताऽऽसीदिति प्रतीयते । ननु मथुरा-मधुरा परस्परं भिन्ने ? परं नैतत्सम्भाव्यते । यतो हि उभयोरनयोः स्थितिस्तु यमुना[१२]तट एवाऽऽसीत् । मनीषिभिः कैश्चिन्मधूपघ्नस्थाने मधुरायाः शब्दस्य पैशाचीरूपं, मधूपघ्नञ्च वर्तमानमेहोलीति स्थानेन समीकर्त्तुं शक्यते ।

---

८. श्रीमद्भागवते ९।२४।५४ कीर्तिमन्तं सुषेणं च भद्रसेन...... ।
विष्णु पु० ४।१५।२६ आनन्द दुन्दुभेर्देवक्यां कीर्तिमत्सुषेणो...... ।

९. रघुवंशे ६।४८ यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारि विहारकाले ।
कलिन्दकन्या मधुरां गताऽपि गङ्गोर्मिसंसक्तजलेव भाति ॥

१०. रघु० १५।२८ उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्ममे निर्ममोऽर्थेषु मधुरां मधुराकृतिः ॥

११. रघु० १५।१५ स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।
वनात्करमिवादाय सत्त्वराशिमुपस्थितः ॥

१२. रघु० ६।५० वृन्दावने चैत्ररथादनूने निविश्यतां सुन्दरि यौवनश्रीः ॥

शूरसेनजनपदस्य राजनगरं मथुरावर्णनानन्तरं वृन्दावनमपि[13] वर्णितं महाकविना। अस्याऽवस्थितिः सम्प्रति तत्रैव विद्यते। पुरातन-वृन्दावनमेकं विशालमरण्यमासीत् यच्चेतोहारिणा प्रकृतिसौन्दर्येण रम्य-वनश्रिया च सुप्रथितमासीत्। साम्प्रतमेतस्य प्राकृतिकी सुषमा यद्यपि विनष्टा, तथापि निधुवनसेवाकुञ्जप्रभृतिपुण्यस्थलेष्वद्यापि प्रकृतेः साम्राज्य-मवलोकयितुं शक्यते। शोभाधिक्यं वृन्दावनस्य वर्णयितुं स्थलमिदं कविना चैत्ररथेनोपमीयते। रघुवंशे इन्दुमतीस्वयंवरसन्दर्भे प्रावृष्यद्यापि वृन्दा-वनस्य प्रकृतिसुषमा सचेतसां चेतांसि हरत्येव।

प्राकृतिकेषु रम्येषु व्रजस्य रूपेषु कालिदासेन कमनीयं गिरिवर्णनमपि कृतम्। अस्मिन् सन्दर्भे गोवर्धनो नाम गिरिराजः पुण्यदोषत्वेन विश्रुत आसीत्। इदानीमस्याऽवस्थितिर्मथुरातो डीगमार्गे सार्धषट्क्रोशे वर्तते। अष्टछापस्य[15] प्रमुखकविभिर्गौरवमयो गिरिराजगोवर्धनो राधाकृष्णयोः केलिक्रीडाकेन्द्रत्वेन वर्णितः प्रकृतिश्रीरपि भव्येनोल्लिखिताऽस्य।

---

१३. रघु० १५।३६,३८, वा० रामायणे उत्तर० ७।७०।५ इयं मधुपुरी रम्या मधुरादेव निर्मिता।

वा० रामायणे ७।७०।६ भविष्यति पुरी रम्या शूरसेनानसंशयः।

" रामायणे ७।७०।१६ तस्य......मधुरां पुरीम्।

" ७।६८।३ एतस्मिन्नन्तरे वीर उत्तीर्य यमुनानदीम्।
तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत॥

१४. रघु० १।४८ कलिन्दकन्या मधुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति।

" १५।२८ उपकूलं स कालिन्द्याः......।

१५. अष्टछापकविश्चतुर्भुजदासः—

ललितव्रजदेशगिरिराजराजे।
घोषसीमन्तिनी संग गिरिवरधरन कान्ति नित केलि तहं काम लाजे॥
त्रिविध पौन संचरे सुखदझरना झरैं, ललित सौरव सरस मधुप गाजें।
ललित तरुफूलफल फलित षट्रितु सदा चतुर्भुजदास गिरिधर समाजे॥

कविकुलगुरुणा कालिदासेन शूरसेनाधिपसुषेणस्य प्रसङ्गे सुनन्दामाध्यमेन शैलेयगन्धवत्यः प्रावृट्शीकरेणाभिषिक्ता[१६] गोवर्धनगिरिकन्दराः प्रतिपादिताः यत्र शिलातलेषूपविश्येन्दुमती मनोरमं मयूराणां नृत्यमवलोकयिष्यति। यद्यपि तद्वन्नैसर्गिकं सौन्दर्यं साम्प्रतमस्य नास्ति, शिलोच्चयस्य शैलेयगन्धवत्याः शिलायास्तथापि प्रावृट्कालिकी गिरिसुषमाऽद्यापि सचेतसश्चेतांसि चोरयति।

आर्यावर्तस्य पवित्रतमासु नदीषु यमुनागङ्गयोः पावनता प्रतीकरूपेण परिगण्यते। व्रजसंस्कृतेः प्राणभूता यमुना कलिन्दकन्या कालिन्दीति नैकनामभिर्व्रजस्य सर्वविधसमृद्धिं सम्पूरयति। यमुनावर्णनं विना व्रजवर्णनमपूर्णमेव। अतएवानेकेषु यमुनाया नैसर्गिकी सुषमा कालिदासेन वर्णिता विविधप्रसङ्गेषु। यद्यपि लोकेऽवलोक्यते गङ्गायमुनयोः संगमस्थानं प्रयागराजे वर्तते, परमत्र व्रजवर्णने कवेरुर्वरकल्पनया मथुरायामेव संगम[१७]दृश्यमुत्प्रेक्षितम्। तत्रावरोधवनितास्तनचन्दनप्रक्षालनेन मधुरां गतापि कलिन्दकन्यागङ्गोर्मिसंसक्तसलिलेव प्रतिभाति। अन्यत्र भूमेः प्रवेणीव परिकल्पिता पावननदीयम्।

वृन्दावनस्थकलिन्दकन्यायां कालियावर्तः "कालीदहेति" नाम पौराणिकं स्थलं साम्प्रतमपि लोककल्याणकारिणः कृष्णस्य कमनीयं क्रीडाकौतुकमयं रूपं कथयति। यथोक्तं कविकुलगुरुणा कालिदासेन पौराणिकनागनाथनतथ्यमिदं रघुवंशे—

---

१६. रघुवंशे ६।५१ अध्यास्य चाम्भः पृषतोक्षितानि शैलेयगन्धीनि शिलातलानि।
कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु॥

१७. रघु० ६।४८ यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले।
कलिन्दकन्या मधुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति

" १५।३० तत्र सौधगतः पश्यन् यमुनां चक्रवालिनीम्।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये॥

"त्रस्तेन तार्क्ष्यात् किल कालियेन मणिं विसृष्टं यमुनौकसा यः ।
वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥

रघु० ६।४९

व्रजस्य लोकप्रियपक्षिसु मयूरस्य स्थानं सर्वोपरि विलसति । पिच्छस्यास्य कलितं किरीटं धारयित्वा कृष्णेन गोपवेशेना[१८]स्मै प्रचुरं गौरवं प्रदत्तम् । नृत्यमप्यस्यानुपमम् । रसभावमयी कालिदासीया दृष्टिरपि विशिष्टस्थले मयूरनर्तने रेमे । अतएव स गोवर्धनगिरेरुपर्युपविष्टामिन्दुमतीं नृत्य[१९]दर्शनाद् वञ्चयितुं न वाञ्छति ।

उपर्युक्ततथ्यपूर्णव्रजवर्णनादेतत्परिज्ञायते यन्महाकवेः कालिदासस्य भौगोलिकं ज्ञानं पुस्तकाधारमभूत्वा पर्यटनस्य पर्यवेक्षणेन विविधानुभवैः परिपूर्णतां गतमासीत् ।[२०]

साम्प्रतं प्राकृतिकं व्रजस्य वैभवं विनष्टप्रायं, परन्तु गर्गसंहिता पुराणादिष्वलौकिकी तस्य श्रीश्चर्चितैव किञ्चिदवशिष्टा च विद्यते यत्र-तत्र । अत एव सुरम्यव्रजस्थलानि सर्वाण्येतान्यक्षिलक्ष्यीकृत्यानन्दपारावारे निमग्नाऽतृप्तहृदयास्तृप्तिं लभन्तां सहृदयाः । कलिकुलगुरुकालिदासः शूरसेनवर्णनव्याजेन व्रजवर्णनं कृत्वा परमां तृप्तिमलभत । साम्प्रतं व्रजस्थसांस्कृतिकप्राकृतिकस्वरूपाणां संरक्षणं सर्वकारेण सर्वतः करणीयं पुरातनगौरवानुभूतये श्रद्धालुतीर्थयात्रिणां सामान्यस्वदेशप्रेमिनागरिकाणां च ।

---

१८. पू० मेघे १५ येन श्यामं वपुरतितरं कान्तिमापत्स्यते ते,
बर्हेणेव स्फुरति रुचिना गोपवेशस्य विष्णोः ॥

१९. रघु० ६।५१—कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु

२०. कालिदास की कृतियो में भौगोलिक स्थलों का प्रत्यभिज्ञान, डॉ० कै० ना० द्विवेदी, द्रष्टव्यः विषयप्रवेशः (भूमिका भागः) पृ० ३९
द्रष्टव्यः 'India In Kalidasa:, B. S. Upadhyayas, Alld. I Edi. ग्रन्थ पृ० १३७

# गीतगोविन्द-टीकायाः पदभावार्थचन्द्रिकायाः समीक्षा

— डा. रमेशचन्द्र होता

श्रीमहाकविजयदेवविरचितं मृदुलपदसरणिललितं रुचिरार्थसंहृतिबहुलं सरसरागनिबद्धसुप्रबन्धप्रधानं शृङ्गाररसभाण्डागारसदृशं हि गीतगोविन्दाख्यं गीतिकाव्यं रागकाव्यं वा वर्ततेतराम्। अस्य मैथिलेन श्री श्रीकान्तमिश्रेण विरचिता पदभावार्थचन्द्रिकाभिधा टीका सहृदयहृदयाह्लादिनी साहित्यसङ्गीतविवेकप्रचुरा ध्वन्यलङ्काररागतालादिलक्षणानुगतिद्योतिका गीतगोविन्दस्याभिप्रायाविष्करणसामर्थ्यसंवलिता वरीवर्ति।

गीतगोविन्दस्येदानीमष्टसप्ततिष्टीकाः प्राप्यन्ते। तास्वनेका महत्त्वपूर्णाः। महत्त्वपूर्णास्वन्यतमा टीका पदभावार्थचन्द्रिका टीकाकारस्य श्रीकान्तमिश्रस्य वैदुष्यं सम्यक् प्रख्यापयति। अस्यां टीकायां प्रायः सर्वेषां शास्त्राणां विषये किमपि किमपि उक्तं टीकाकर्त्रा। क्वचित् ज्योतिषविषये क्वचिच्च धर्मशास्त्रामीमांसा-वेदान्त कामशास्त्र-नाट्यशास्त्र-संगीतशास्त्र-शकुनशास्त्रादीनां विषये गभीरं विशदं च विवेचनं प्राप्यते। येनास्याष्टीकाया महत्त्वमन्या विशिष्टटीका अपि अतिशेते।

काव्यटीकाकारेषु महापण्डितेन मल्लिनाथेन सञ्जीवन्याख्यटीकायाः प्रारम्भ एव स्पष्टमुद्घोषि-"नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते इति। यथैव मनीषिणा मल्लिनाथेन स्वघोषणा सर्वथा प्रतिपालिता स्वव्याख्यासु तथैव धीमता श्रीकान्तमिश्रेणापि पदभावार्थचन्द्रिकायां मूलोक्तपदानां व्याख्या, यथावसरं व्याकरणप्रक्रियया शब्दव्युत्पत्तिः, कोशोऽलङ्कारो भावस्फोटनायान्यान्यग्रन्थोद्धरणादि च सर्वाण्यपेक्षितवस्तूनि सन्निवेशितानि। इत्थं काव्यशास्त्रच्छन्दः-शास्त्र-कोष-संगीत-शकुनशास्त्र-पुराणादिदृष्ट्याऽस्याष्टीकाया महती उपादेयता वर्तते।

(अ) अलंकार:

गीतगोविन्दकाव्यस्य प्रथमसर्गस्य द्वितीयप्रबन्धस्य द्वितीयगीतस्य पद भावार्थचन्द्रिका निभालयन्तु सुधियः—

"दिनमणिमण्डलमण्डनभवखण्डन ए।
मुनिजन मान सहंस जय जय देव हरे ॥"

इति मूलम्।

टीका —पुन: कथम्भूदिनमणीत्यादि। दिनमणे: सूर्यस्य यन्मण्डलं तस्य मण्डनं हारभूतं तादृश, तथा च

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः।" इति पुराणप्रसिद्धिः।"

एतेन स्थिररुचिरत्वमुक्तम्। पुनः कथम्भूतः हे भवखण्डन भवं संसारं खण्डयतीति भवखण्डनः प्रलयकर्ता सः तथा तत्सम्बुद्धौ (अनेन सामर्थ्य-रूपो नायकगुण उक्तः)। मुनिजनेति। मुनिजनानां मानसस्य स्वच्छत्वेन हंसाश्रयत्वेन च साधारणधर्मेण हंसत्वेन निरूपणम्। इदं च परम्परितरूप-कमलङ्कारः। तदाहुः—

नियतारोपणोपायः स्यादारोपः परस्य यः।
तत्परम्परितं श्लिष्टे वाचके भेदभालि वा ॥

"मानसं सरसि स्वान्ते इति विश्वः" इत्यमेवेयं टीका प्रायः सर्वत्र रराजते। तत्र निदर्शनार्थं पूर्वं कतिपयेषु गीतेषु टीकाकारेण कृतमुपमाद्य-लंकाराणां विश्लेषणं द्रष्टव्यं यथोत्प्रेक्षागर्भोपमालङ्कारस्य साधुसन्निवेशः प्रथमसर्गस्य प्रथमगीते बलरामावतारस्य वर्णनप्रसंगे समुपलभ्यते। तत्र मलयानिलवशात् कम्पमानस्य वस्त्रस्य भययुक्तयमुनाया इवोत्प्रेक्षणादुत्प्रे-क्षागर्भोपमास्ति। यतो भीरूणां हि कम्प उचित एवेति भावः।

यथा वहसि वपुषि ·····इत्यत्रोत्प्रेक्षागर्भोपमालङ्कारसन्निवेशस्त-थैवैकादशसर्गस्यैकविंशतितमे गीते सप्तमपदे "दशनरुचि" इत्यत्र द्वितीय-व्याख्याने प्रसिद्धशिखरस्योपमेयतयाऽस्य विपर्यासोपमालङ्कारस्य सन्निवेशः कृतो वर्तते। तल्लक्षणं चोक्तं दण्डिना—

**त्वदाननमिवोन्निद्रमरविन्दमभूदिति।**
**सा प्रसिद्धविपर्यासाद्विपर्यासोपमेष्यते॥** इति।

तृतीयसर्गे सप्तमगीते चतुर्दशश्लोके विरोधाभासोऽलङ्कारो द्रष्टव्यः- "सद्वृत्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति" प्रेयस्याः सद्वृत्तो वर्तुलाकारः स्तनमण्डलः प्रेयांसं प्राणैर्वियोजयतीति वर्णितम्। सद्वृत्त-शब्दस्यार्थौ श्लेषेण द्वौ वृत्तः सदाचारः वृत्तः वर्तूलाकारश्चेति। स्तनस्य वर्तूलत्वं विरहिणं प्रेयांसं पीडतीति कविसम्प्रदायः। द्वितीयो वृत्तस्यार्थः सदाचारः। स च सदाचारः कमपि न पीडयति। अत्र च सद्वृत्तमपि सदाचारयुक्तमपि स्तनमण्डलं पीडयतीति विरोधः। सद्वृत्तशब्दस्य च सद्वर्तुलार्थत्वे कामिजनपीडनमुचितमेवेति विरोधपरिहारः। अतोऽत्र विरोधाभासालङ्कारः। पञ्चमसर्गे एकादशेगीते चतुर्थे श्लोके सहोक्त्यलं-कारो वर्णितः। तथा हि त्वद्वाष्पेणात्रेत्थं वर्णितं यदभिसारसमयः सम्प्राप्तः।। विलम्बो मा क्रियताम्। तत्राभिसारस्य सर्वोऽपि संभारः संप्राप्तः। यथा सायंसमय आगतः। मिलनविरहजेन वाष्पेण सह सूर्योऽस्तं गतः। तमो धनीभूतम् सहैव गोविन्दस्य मनोरथोऽपि घनीभूतः। एवं रीत्या सूर्यतमः कोकरवक्रियाभिः सह कालमनोरथप्रार्थनानां सम्प्राप्तत्व-दीर्घत्वादीनां सहसम्पन्नत्वात् सहोक्त्यलङ्कारः।

एवं विशेषोक्ति-दीपक-विभावना-रूपकादिबहूनामलंकाराणां गीत-गोविन्दे सविवरणं साधुप्रदर्शनं कृतं टीकाकर्त्रा।

ननु विदितवरमेवैतत् समेषां विदुषां यत् काव्येषु नाटकेषु च नायक-नायिकयोरस्तित्वमनिवार्यम्। प्रस्तुतगीतगोविन्दस्य नायकः श्रीकृष्णो नायिका च श्रीराधा। उभौ क्रमशः नायकनायिकयोर्गुणैरूपेतौ वर्तेत इत्यत्र नास्ति सन्देहलवः। अस्यामवस्थायां यष्टीकाकारो नायकनायिकाभेदं न

जानाति सोऽस्य काव्यरत्नस्य साध्वीं टीकां कर्तुं कदापि न प्रभवति। सौभाग्यस्य विषयोऽयं यत् पदभावार्थचन्द्रिकाकारो नायकनायिकाभेदं सम्यग् वेत्ति। यतो हि तेनात्र प्रोषितप्रेयस्यभिसारिकान्वासकसज्जोत्के-त्यादिनायिकाभेदानां न केवलं नामैव परिगणितमपितु तासां सर्वासां नायिकानां लक्षणान्यपि ग्रन्थान्तरेषु निहितान्यन्विष्य स्वटीकायां पाठका-नामवबोधाय संयोजितानि।

प्रथमसर्गस्य तृतीयगीते प्रथमश्लोके शृङ्गाररसप्रधानं भगवत्केलि-वर्णनमस्ति। शृङ्गाररसस्य द्वौ भेदौ-संभोगशृङ्गारो विप्रलम्भशृङ्गारश्च। तत्र विप्रलम्भशृङ्गारः संभोगशृङ्गारात् प्रशस्यतरः। अत्र प्रोषितभर्तृ-चरितवर्णनेन विप्रलम्भशृङ्गारो वर्णितः। तत्र प्रोषितभर्तृकायाः लक्षणं किमिति प्रदर्शयितुं श्रीकान्तमिश्रः शृङ्गारतिलकादुद्धरति—

**कुतश्चित्कारणाद्यस्याः पतिर्देशान्तरं गतः।**
**दत्त्वावधिं भृशार्त्ता सा प्रोषितप्रेयसी यथा॥**

प्रथमसर्गस्य द्वितीयगीते दशमश्लोके श्रीकृष्ण उत्तमनायकरूपेण वर्णितः। तदर्थं नायिकाया लक्ष्म्याः सदानुरागः कथितः। यस्मिन्नायके नायिकायाः सदानुरागः स उत्तमनायकः। उत्तमनायके के के गुणा भव-न्त्येतदर्थं टीकाकारः शृङ्गारतिलकादुद्धरति—

**यो गौरवं भयं प्रेम दाक्षिण्यं पूर्वयोषिति।**
**न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा॥**

इत्थमेव टीकाकारेण अभिसारिका-वासकसज्जादिनायिकानां लक्ष-णानि रसार्णवसुधाकर-नाट्यशास्त्रादिग्रन्थेभ्य उद्धृत्य स्वाध्यवसायस्य परिचयो दत्तः। विदुषा टीकाकारेण गीतगोविन्दपद्येषु अलंकारप्रदर्शनमिव यत्र तत्रच्छन्दसां सन्निवेशो रसभावानुसारं सम्यगकारि। मिश्रेण व्यलेखि-पुष्पिताग्रेति नामकं प्रथमं छन्दः। शृङ्गारप्रकरणे वस्तुत ऋतुराजस्य वसन्तस्य पूर्णतायां स्वनाम्नः सार्थकतां द्योतयति। अत्रत्यं प्रकरणं शृङ्गार-स्यैव वर्तते। टीकाकारेणात्र पुष्पिताग्राछन्दसो विशदव्याख्यानेन कवे-स्तात्पर्यं कीदृङ्मनोहररूपेण प्रकटितमिति नाप्रत्यक्षं प्रेक्षावताम्।

द्वितीयस्य शिखरिण्यभिधस्य छन्दस्य सार्थकतापि साधु प्रतिपादिता टीकाकृता यतो हि मल्लिकादिपुष्पेषु द्राक्षादिफलेषु स्त्रीरत्नेषु च शिखरिणी शब्दस्य प्रयोगः क्रियते। द्वितीयसर्गस्य षष्ठगीत एकादशश्लोके "दुरालोक-स्तोक"—मित्यत्र शिखरिणीच्छन्दः टीकाकारेण लिखितम् अपि च इयं शिखरिणी गोवर्धनपर्वते-वर्तमानानां चूतानामाम्राणां मुकुलप्रसूतिरपि कुड्मलोद्गमोऽपि न सुखयति। विकाशदशायां तु को वेद किं करिष्यतीति ध्वनितम्। यद्वा शिखरिणी मल्लिका न सुखयतीत्यर्थः। कथम्भूतं भ्राम्य-न्तीनां भृङ्गीणां भ्रमराङ्गनानां रणितैर्गुञ्जितै रमणीयशिखरिणीनामकं छन्द इत्यपि ध्वनितम्।

तृतीयस्योपेन्द्रवज्राख्यच्छन्दसः साभिप्रायत्वमपि सम्यक्प्रदर्शितं टीकाकारेण—

"संसर्गजा दोषगुणा भवन्ति" एष नियमः शाश्वतिकः। उपेन्द्रस्य श्रीकृष्णस्य वज्रमतीव कठोरं तस्य सम्पर्कवशात् कठोरत्वं श्रीकृष्णेऽवश्य-मागतम्। "यथा नाम तथा गुणः" इति चरितार्थयताऽत्रानेनच्छन्दसा कवेर्भावः कथं प्रकाश्यते इत्यस्मिन् विषये पदभावार्थचन्द्रिका-नाम्नी टीकैव प्रमाणमिति।

संस्कृते कस्यापि ग्रन्थस्य टीकाकारो व्याकरणशास्त्रे यदि निपुणो न भवेत् तर्हि स स्वप्रतिपाद्यस्य विषयस्य सम्यक् स्फोटनं कर्तुं नार्हति। "मुखं व्याकरणं स्मृतम्" इत्युक्त्या यथा मुखं विना शरीरसन्धारणं तथैव व्याकरणं विना वाक्यरचनां वाक्यावबोधं वा कर्तुं न शक्नोति कश्चन। अतएव संस्कृतस्य येऽपि टीकाकारा अभवन् ते सर्वे व्याकरणशास्त्रे निपुणा आसन्। पदवाक्यप्रमाणज्ञोऽभूत्वा न कोऽपि टीकाकारो भवितुमर्हति। सुप्रसिद्ध-टीकाकारस्य मल्लिनाथस्यास्मिन् शास्त्रे कीदृशी प्रौढिरासीदिति सर्वे जानन्ति तत्त्वविदः। तथैव पदभावार्थचन्द्रिकानाम्न्याष्टीकायाः प्रणेता श्रीकान्तमिश्रोऽपि व्याकरणशास्त्रे कृतभूरिपरिश्रमः प्रतिभाति। अस्यां टीकायां व्याकरणविषयिणी या सामग्री वर्तते तथास्याष्टीकाया उपादेयता एधत एव। यथा—

चतुर्थसर्गेऽष्टमगीते प्रथमश्लोके राधिकेति । अत्र अनुकम्पायां कप्रत्ययं विधाय टीकाकारो विरहव्यथापीडिताया अनुकम्पाया "राधायाः" पदव्युत्पत्तिपुरःसरमिदं व्याख्यानं प्रस्तौति यदियं राधाकृष्णस्याराध्या सत्यप्यस्यां कामदशायां कृष्णस्य सान्निध्यं कामयमाना अनुकम्प्यत्वमर्हति । अनुकम्प्यत्वमिदं कप्रत्ययेन प्रदर्शितम् । विरहावस्थायां या नायिका पीडिता भवति सा दीना दुःखिता च भवति । यद्यपि एवंविधाया दुःखिताया दुःखे यो हेतुर्भवति स रागात्मकत्वेन सुखात्मको भवति । पुनरपि स हेतु दुःखायैव भवति । अतएव नायिका स्वोपकर्तुर्ध्याने लीना निमग्ना । एवंविधोऽर्थः "अनुकम्पायां कः" इत्यनेन कप्रत्येनैव संभवति नान्यथा ।

दशमसर्गे ऊनविंशतितमे गीते प्रथमपदेऽधरशीधव इत्यत्र या व्याख्या वर्तते तस्यां व्याकरणविषयकं यद् विवेचनमुपलभ्यते तेनेदं प्रतिभाति यट्टीकाकारेण शब्दानुशासनस्य दर्शनपक्षस्यापि पर्यालोचनं कृतम् । चतुर्थीविधानविषयकं विवादमवलम्ब्य यत् खण्डनमण्डनात्मकं विवेचनमत्र प्रस्तुतं तदेव तस्य व्याकरणविषयिण्याः प्रतिभायाः प्रमाणम् ।

प्रथमसर्गस्य प्रथमगीते दशमपदे "म्लेच्छनिवहनिधने" इत्यस्य पदस्य टीकाकरणावसरे श्रीकान्तमिश्रेण व्याकरणशास्त्रदिशेदं प्रतिपादितं यन्म्लेच्छनिवहनिधनमिह क्रियापन्नं यन्निमित्तत्वेन विवक्षितम् । क्रियायाः प्रयोजके योऽर्थःक्रियारम्भ ततो हेताविति तृतीयायां प्राप्तायां सप्तमी विधीयते । यतो हि संयोगः सम्बन्धस्तेनात्र क्रियाफलस्य निमित्तस्य कर्मणा संयोगात् सप्तमी । यत्र तु कर्मणा संयोगो न भवति तत्र सप्तमी न भवत्यपितु तृतीयैव भवति, यथा वेतनेन धान्यं लुनातीत्यत्र वेतनस्य धान्येन संयोगाभावान्न सप्तमी किन्तु तृतीया भवति ।

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च" इत्यभियुक्तोक्त्या सिद्धचति यद् यथा शब्दार्थशक्तिग्रहे व्याकरणस्य प्रामाण्यं तथैव कोषाणामपि । अतएव भारतीयचिन्तने प्रायः सर्वेषामाकरग्रन्थानां भाष्ये व्याख्यया टीकाया वा विद्वद्भिः कोषाणामप्युल्लेखो व्यधायि । अस्माकं देशे प्राचीनकोषाः प्रायः पद्यमयाः । यथामरकोशः, विश्वकोषः,

धरणकोषः, हलायुधकोषः, वैजयन्तीकोषादयः । प्रकृतपदभावार्थचन्द्रिका टीकाया विदुषा टीकाकारेण श्रीकान्तमिश्रेण प्रायः विवक्षितानां कोषाणां स्वाभिमतं प्रमाणयितु मुल्लेखः कृतोऽस्ति । यथा—

अमरकोषो, विश्वप्रकाशकोषः, हारावलीकोषो, मेदिनीकोषो, धरणीकोषः, शाश्वतकोषः, कात्यकोषोऽनेकार्थकोषः ।

विदितचरमेवैतत्समेषां विदुषां यद् गीतगोविन्दं रागतालसमन्वितं गीतिकाव्यं वरीवर्ति । "तद्धि जानन्ति तद्विदः" इति न्यायाद् संगीतोनिर्भरस्य ग्रन्थस्य टीका संगीतशास्त्रभिज्ञः कश्चिद् विद्वानेव कर्तुमर्हति । सौभाग्यस्य विषयो यदस्य टीकाकारः सुधीः श्रीकान्तमिश्रः संगीतशास्त्र निष्णातो भाति । अस्य पदभावार्थचन्द्रिकातः कानिचित् स्थलानि निदर्शनरूपेणोद्धियन्ते । तद्यथा—

प्रथमसर्गस्य प्रथमगीते दशावतारपुरस्कारेणैव श्रीकृष्णं स्तुवन्नादौ मीनरूपं स्तौति-प्रलयेत्यादिः । गीतस्यास्य मालवरागो रूपकतालः । रागलक्षणम्—

नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः ।
संगीतशालां प्रविशन् प्रबोधे
मालाधरो मालवरागराजः ॥

"रूपके स्याद्द्रुतं लघु" इति संगीतरत्नाकरः । प्रथमसर्गस्य तृतीयगीते प्रथमपदे किमूच इत्यत आह-ललितेत्यादि । गीतस्यास्य वसन्तो रागो यतितालः । काललक्षणं प्रति कोलाहलः । लघुयुग्माभिघातेन यतितालः प्रकीर्तितः ।

द्वितीयसर्गस्य द्वितीयगीते प्रथमपदे अथोत्कण्ठिता राधा स्वमनोरथानाह ।

गीतस्यास्य मालवरागः । एकतालितालः ।

**चन्द्रिका विपुलारामा एकतालत्रिधा मता।**
**तन्मध्ये विपुलेयं श्रृगारं गीयते रसे॥**

आचार्यभरतो धर्मार्थ-काममोक्षाख्यपुरुषार्थचतुष्टयं कामस्य रूपमेव मनुते। तेन समस्तभावानां निष्पत्तिः कामादेव निगद्यते। अयं काम इच्छागुणसम्पन्नो भूत्वानेकानि रूपाणि धारयति। इयमिच्छा धर्मार्थ-काममोक्षपरका भवितुमर्हति। अतएव भरतेन धर्मकामोऽर्थकामः, काम-कामस्तथा मोक्षकामः इत्येते चत्वारो भेदाः कृताः सन्ति।

अयमेव कामो विकसितो भूत्वा श्रृङ्गारस्य मूलं बोभूयते। श्रृङ्गारस्य द्वावेव प्रधानभेदो स्तः—एकः संभोगोऽपरश्च विप्रलम्भः। गीतगोविन्दं श्रृङ्गारकाव्यमेवास्ते। अस्मिन् कविवरेण जयदेवेनोभयोः श्रृङ्गारभेदयोः प्रयोगः सम्यगकारि। अतएवास्य ग्रन्थस्य व्याख्या काम-शास्त्रवेत्ता विद्वानेव कर्तुं शक्नोति। पदभावार्थचन्द्रिकाव्याख्याकर्तुः श्रीकान्तमिश्रस्य कामशास्त्रज्ञानं परिपूर्णं प्रतीयते। अयं हि यत्र-यत्राष्टपद्या व्याख्याने स्वीयं कामशास्त्रज्ञानं प्रादर्शयत्। तथाहि—

द्वितीयसर्गे षष्ठगीते निभृतनिकुञ्ज इति पदस्य स्वव्याख्यायां तेनो-क्तम् राधा सखीं कथयति—हे सखि, मया सह केशिमथनं कृष्णं रमय। मयेत्यस्य विशेषणं मदनमनोरथभावितया दत्तम्। अत्र मदनमनोरथस्य मदनेच्छाया रतिस्तया युक्तया राधयेति तेन व्याख्यातम्। तस्मात् सम्प्राप्तरसिकैव राधा। एवं कदापि न जातं यद् राधया समाहूतः कृष्णो न समायातः। एतेन कृष्णोऽपि रतिभावभावित इत्यायाति। तेन चान्यो-न्यरागपूर्वकत्वेन श्रृङ्गाररसस्य सम्पुष्टिर्जायते। अन्यथा श्रृङ्गाररसो-ऽभूत्वा भाव एव स्यात् तत्र च मदनमनोरथभावितया सविकारमर्थात् मदनमनोरथस्य विकारः स्तनप्रान्तादिप्रकटनं तत्सहितं यथा स्याद् तथा भावितया राधयेति। अत्र मदनमनोरथविकाराः के के भवन्त्येतदर्थं श्रृङ्गारतिलकग्रन्थस्यैकं श्लोकमुद्धरति स्म।

**नाभीमूलकुचोदरप्रकटनव्याजेन यद्योषितां**
**साकांक्षं मुहुरीक्षणं स्खलितकं नीवीनिबन्धस्य च।**

**केशभ्रंशनसंयमौ च कमितुर्मिश्रादिसन्दर्शनैः**
**सौभाग्यादिगुणप्रशस्तिकथनैस्तत्सानुरागेङ्गितम् ॥** इति ।

द्वितीयसर्गे षष्ठगीते "चरणरणित" इति सप्तमपदे सकचग्रहचुम्बन-दानमित्यस्य व्याख्यायां चुम्बनं कतिविधं भवति तथा कचग्रहचुम्बनं कदा कीदृशं भवतीति स्पष्टयितुं शृङ्गारतिलकस्योद्धरणं दत्त्वा विवृणोति यद् विपरीतरतौ सकचग्रहचुम्बनं भवति । यथा—

**शृङ्गारे चुम्बनं कार्यं बसालिङ्गनपूर्वकम् ।**
**विपरीतरतौ नार्याः सकचग्रहचुम्बनम् ॥**

प्रायः सर्वेषु संस्कृतकाव्येषु नाटकेषु च भाविशुभाशुभसूचकेष्वङ्ग-स्फुरणादारभ्य पशुपक्ष्यादिदर्शन-तच्छब्दश्रवणात्मकेषु शकुनेषु कस्यापि शकुनस्योल्लेखो वर्तत एव। महाकविजयदेवस्य विश्रुतं गीतगोविन्द-काव्यमपि नैतद् विरहयति । यथा—

**स्फुरितमनङ्गतरङ्गवशादिव सूचितहरिपरिरम्भम् ।**
**अनिलतरलकिसलयनिकरेण करेण लतानिकुरम्बम् ।**
**प्रेरणमिव करभोरु करोति गतिं प्रतिमुञ्च विलम्बम् ।**
**पृच्छ मनोहरहारविमलजलधारममुं कुचकुम्भम् ॥** मुग्धे० ॥

इत्यादि पदेषु शकुनसंकेतो विद्यते । ये टीकाकाराः शकुनशास्त्रान-भिज्ञा भवेयुर्न ते आसामष्टपदीनां सम्यगर्थं स्फोटयितुं रहस्यमुद्घाटयितुं वा शक्नुयुः । सौभाग्यात् पदभावार्थचन्द्रिकाकारः श्रीकान्तमिश्रः शकुन-शास्त्रविद् भाति । प्रमाणरूपेण उपरितनयोर्गीतयोः यादृशी व्याख्या तेन कृता तया स्पष्टमेव तस्य शकुनशास्त्राभिज्ञत्वमुपपद्यते ।

एकादशसर्गस्य विंशतितमगीतस्य "अनिलतरल" इति चतुर्थपदस्य व्याख्यायां श्रीकान्तेनोक्तं यत् किसलयकम्पनमसमञ्जससूचकं शकुनम् । तथा पल्लवितपुष्पवृक्षादिदर्शनं यात्रायां फलसिद्धिसूचकं शकुनम् । तदर्थं च प्रमाणत्वेन शकुनशास्त्रस्यैकः श्लोक उद्धृतः—

वामे मधुरवाक्पक्षी वृक्षः पल्लवितोऽग्रतः ।
अनुकूलो वहन्वायुः प्रयाणे शुभसूचकः ।। इति ।

एवमेव एकादशसर्गे विंशतितमगीते पञ्चमपदे कुचकुम्भकम्पनं वर्णितम् । तत्र श्रीकान्तमिश्रो लिखति स्तनकम्पनं प्रियमिलनं सूचयति । तेन स्तनकम्पनं शुभशकुनमिति । प्रमाणितं च तेन शास्त्रश्लोकेन । यथा—

नित्यं नार्याः स्तने कम्पः प्रियसंगमसूचकः । इत्थं छन्दोऽलंकार-सङ्गीत-कोष-कामशास्त्र-शकुनशास्त्राद्यभिज्ञः श्रीकान्तमिश्रः वेदपुराणादिष्वपि पटीयानासीदिति तत्कृतपदभावार्थचन्द्रिकाटीकात एव प्रतीयते । विस्तरभयान्नात्र तत्सर्वं प्रपञ्च्यते इति दिक् ।

# राजशेखर के ग्रन्थों में वर्णित पारलौकिक दिव्य जीवन की छाया में ऐहलौकिक विलास

—डॉ० रामदयाल सिंह

आचार्य राजशेखर कृत ग्रन्थों में पारलौकिक दिव्य जीवन की छाया से प्रवाहित होती हुई ऐहलौकिक विलास की उर्वर भूमि को सतत अभि-सिंचित कर रही है।

ऐसा प्रतीत होता है कि राजशेखर ने कर्पूरमञ्जरी में इस प्रवृत्ति के पोषक तांत्रिकों के प्रतिनिधि के रूप में भैरवानन्द की अवतारणा की है। उस समय समाज पर तांत्रिकों का प्रभाव प्रबल हो गया था। संभवतः इसका कारण उनकी तांत्रिक सिद्धियों की ही है, जो राजमहलों के अन्तः-पुरों तक कुतूहल उत्पन्न कर रही थी :

"देवी— किं सो, जो जणब्भणादो
अच्चब्भुदसिद्धि सणीअदि ?"[1]

कर्पूरमञ्जरी का भैरवानन्द जिस कौल-मार्ग की उद्घोषणा करता है, वह दिव्य जीवन की छाया में पनपती हुई ऐहलौकिक विलास की भावना मात्र है। तत्कालीन राजाओं तथा सर्वसाधारण के मन में छिपी हुई विलास और श्रृंगार की भावना से वह अवगत है। इसलिए वह इस भावना को धार्मिक और आध्यात्मिक रूप प्रदान करता हुआ उन्हें अपनी ओर आकृष्ट करने का प्रयास करता है। वह कहता है, "हम न तो कोई मन्त्र जानते हैं और न तंत्र, हमें न कोई शास्त्र-ज्ञान है और न हम कोई

---

१. कर्पूरमञ्जरी; प्र० ज०, पृ० ३५

ध्यान या समाधि ही लगाना जानते हैं। सुरा का सेवन करते हैं। दूसरों की स्त्रियों के साथ सहवास करते हैं और मोक्ष पाते हैं। यही हमारा कुलाचार है।[२] वह कुलाचार का मार्ग जिसमें योग, जप, तप या और किसी शास्त्रीय ज्ञान की कोई आवश्यकता ही नहीं है और स्वच्छन्दता से विचरण करते हुए मुक्ति प्राप्त की जा सकती है, वह सर्वसाधारण को पसन्द आना स्वाभाविक है। सुरत और सुरा से मोक्ष मिलने की बात[३] तत्कालीन राजाओं के मन की बात थी। जब भैरवानन्द अपनी अद्भुत सिद्धियों की चर्चा करता हुआ कहता है, कि "चन्द्रमा को भी पृथ्वी पर उतार सकता हूँ, सूर्य का रथ आकाश मार्ग में रोक सकता हूँ, यक्ष, सुर और सिद्धगणों की सुन्दरियों को ला सकता हूँ। भू-मण्डल पर ऐसा कोई कार्य नहीं, जिसे मैं न कर सकूँ।"[४] इसी क्रम में वह राजा के आग्रह पर विदर्भ देश से सद्यः-स्नाता कर्पूरमञ्जरी को लाकर उनके समक्ष प्रस्तुत करता हुआ सबों को आश्चर्यचकित कर देता है।[५] लेकिन उसकी अद्भुत सिद्धि का रहस्य वहाँ खुलता है, जहाँ वह कर्पूरमञ्जरी को चामुण्डा की प्रतिमा की ओट में बने सुरंग मार्ग से आने जाने का संकेत देकर रानी को विस्मित कर देता है।[६] पुनः वह कर्पूरमञ्जरी के प्रति राजा की आसक्ति से परिचित है और उनकी इस वासना-पूर्ति के लिए ही वह धार्मिक स्वांग रचता हुआ महारानी से गुरुदक्षिणा के रूप में राजा के साथ कर्पूरमञ्जरी का विवाह करा देने की अनुमति का निवेदन करता है। इस तथ्य का पता, रानी को छोड़कर, राजा के अन्य परिजनों पहले से ही था।[७] इससे यह स्पष्ट है कि तत्कालीन समाज में "भोग से योग" की बात बताकर

---

२. वही, प्र० ज०, श्लोक २२

३. वही, श्लोक २४

४. वही, श्लोक २५

५. वही, पृ० ३९ (चोखम्बा)

६. कर्पूरमञ्जरी; च० ज०, पृ० १७८-१८१

७. वही; पृ० १७७

ऐहलौकिक विलास की भावना पर आध्यात्मिकता का पर्दा डालने का प्रयास अनवरत चल रहा था।

पुनः इस प्रक्रिया का पता तो राजशेखर के ग्रन्थों के उन मांगलिक श्लोकों से भी प्राप्त हो जाता है जिनमें मांसल शृंगार का आरोप देवताओं तक में भी किया गया है।

**स सिखंडमंडगाणं समोहणासाणं सुरअणपिआणम्।**
**गिरिसगिरिदंसुआणं संघाडो बो सुहं देउ॥**[८]

विद्धशालभंजिका ने अन्त में भरतवाक्य के माध्यम से कवि ने जो मंगल कामना की है, उसमें भी तत्कालीन समाज में व्याप्त ऐहलौकिक विलास का प्रतिबिम्ब हैं।[९] वह कहता है कि—"जब तक शिवजी का वामांग पीन स्तनों से स्तबकित है, भगवान् विष्णु की भुजाओं में लक्ष्मी के आलिंगन का उद्योग है, ब्रह्मा के दोनों हाथ अपनी प्रतिमा-प्रसार के लिए व्यग्र है तब तक कानों की सीपी में चाहने योग्य सज्जनों की मधुर सूक्तियाँ अमर रहें।" इन उक्तियों से ऐसा आभास मिलता है कि कवि देवी-देवताओं की काल्पनिक विलासमयी चेष्टाओं में अपने समय की ऐहलौकिक विलास की बढ़ती हुई जनरुचि को उचित आधार देने में प्रयत्नशील है। इसलिए उपर्युक्त उद्धरणों की समीक्षा के तश्चात् हम इस निष्कर्ष पर पहुँचते हैं कि तत्कालीन समाज के सांस्कृतिक जीवन की एक प्रमुख धारा थी "दिव्य जीवन की छाया में ऐहलौकिक विलास की बलवती भावना।"

समाज में जहां वैवाहिक रस्म-रिवाजों की परम्परा और रूढ़ियों का उन्होंने प्रसंगवशात् उल्लेख किया है,[१०] वहीं काव्य-पुरुष और साहित्य-

८. (क) कर्पूरमञ्जरी; प्र० ज०, पृ० ३
(ख) बालभारत; पृ० १, श्लोक २
९. विद्धशालभंजिका; पृ० १, च० अ०, श्लोक २७
१०. (क) कर्पूरमञ्जरी; च० ज०
(ख) विद्धशालभंजिका; च० अ०

'विद्या-वधू' की प्रणय लीला एवं गान्धर्व विधि से पाणिग्रहण करने की कथा[11] के माध्यम से वे एक ऐसे आदर्श की आधारशिला भी रखते हुए दीख पड़ते हैं जिसमें वैवाहिक जटिलताएँ न हों, सम्बन्ध लादा या थोपा न जाए, बल्कि वर-वधू को पारस्परिक प्रेम के धरातल पर स्वेच्छा से अपने जीवन-संगी के चयन करने का समुचित अवसर प्राप्त हो। राजशेखर और अवन्तिसुन्दरी का विवाह कुछ इसी आदर्श से प्रेरित प्रतीत होती है, क्योंकि पति ब्राह्मण कुलोत्पन्न था और पत्नी क्षत्रियकुलोद्भवा एक चाह्वान कन्या थी।[12]

अतः यह कहा जा सकता है कि कर्पूरमञ्जरी अपने समय में बढ़ते हुए तान्त्रिक प्रभाव की प्रत्यक्ष साक्षी है, इसलिए उस समय की कला पर तान्त्रिक प्रभाव का पड़ना स्वाभाविक है। इस युग के सामाजिक और धार्मिक जीवन की एक विशेषता, जो तत्कालीन कला में प्रतिबिम्बित है, स्त्री का प्राधान्य और बढ़ता हुआ प्रभुत्व है। फलतः कर्पूरमंजरी की गौरी-मूर्ति या चामुण्डा मूर्ति इसी प्रभाव का प्रतीक है। स्थितियों और घटनाओं का सूत्र एक तांत्रिक के ही हाथ में है। इससे स्पष्ट है कि तत्कालीन समान में तांत्रिक सम्प्रदाय का कितना अधिक प्रभाव था। कर्पूरमंजरी के भैरवानन्द ने अपने जिस रूप का चित्रण किया है वह बाहर से देखने में किसी भी समाज के लिए भयावह प्रतीत होता है।[13] परन्तु इस सम्प्रदाय के सिद्धान्तों पर विचार करने से बहुत सी भ्रान्त धारणायें समाप्त हो जाती हैं।

राजशेखर शैव-मतावलम्बी थे। साथ ही साथ तन्त्र मन्त्र में भी उनका अटूट विश्वास था। उनकी सम्मति में 'कविराजता' एवं काव्य क्षेत्र में संसिद्धि प्राप्त करने के लिए अध्ययन तथा अभ्यास के अतिरिक्त

---

११. काव्यमीमांसा; अ० ३

१२. (क) बालरामायण, प्र० अ०, पृ० ११-१२

(ख) कर्पूरमञ्जरी, प्र० ज०, श्लोक ११

१३. कर्पूरमञ्जरी, प्र० ज०, श्लोक २२

मन्त्रानुष्ठान भी अत्यन्त आवश्यक है अर्थात् तन्त्र-मन्त्र और धार्मिक अन्ध विश्वासों ने साहित्य के क्षेत्र में अपना प्रभाव जमाना प्रारम्भ कर दिया था। इसके अतिरिक्त प्रेम और शृङ्गार के संसार में भी तांत्रिकों का प्रवेश सुलभ हो गया था। प्रेमिकाओं को प्रेम या व्यक्तिगत गुणों से वश में करने की अपेक्षा भयंकर तांत्रिकों एवं उनकी अप्राकृतिक तांत्रिक प्रक्रियाओं को काम में लाने की प्रथा चल पड़ी थी। इसके साथ ही लड़ाइयों में पुरुषार्थ की अपेक्षा तन्त्र मन्त्र पर अधिक विश्वास किया जाने लगा।

कर्पूरमञ्जरी में उपस्थित भैरवानन्द जैसे ताँत्रिकों तथा उनके द्वारा प्रचारित नग्नकौल धर्म का कुप्रभाव धीरे-धीरे सम्पूर्ण समाज पर बढ़ता गया जिसके परिणामस्वरूप सामाजिक आचरण और नैतिक मूल्यों में गिरावट शुरू हो गई। लोगों की आसक्ति सुरा-सुन्दरी की उपासना में बढ़ने लगी। उदात्त राष्ट्रीय भावनायें सोने लगीं और उन्नत धार्मिक आदर्श मुरझाने लगे। मन्दिरों की भित्तियों पर नग्न चित्र का आकलन आरम्भ हो गया। फलतः जिस समाज ने अपनी प्राचीन परम्परा के उन्नत आदर्शों से प्रेरणा लेकर शकों, हूणों और अरबों का मुकाबला किया था, वही बाद में निम्न धार्मिक स्तर से उत्पन्न हीनवृत्तियों का शिकार बनकर शिथिल पड़ गया और विदेशियों की दासता में दुर्भाग्य के दिन देखने को विवश हो गया। परन्तु उत्तर-मध्ययुग में सौभाग्य से बढ़े-बड़े वैष्णवाचार्यों और सन्तों का प्रादुर्भाव हुआ और पुनः उन लोगों ने राम और कृष्ण के प्राचीन ऊंचे आदर्शों की स्थापना के द्वारा इस घृणित निम्न धार्मिक स्तर में फंसे हुए समाज का उद्धार किया, जिससे लोगों में फिर एक बार जीवन के प्रति आस्था और भविष्य के प्रति आशा एवं विश्वास के भाव उत्पन्न हो सके।

आचार्य राजशेखर ने काव्य-मीमांसा के आठवें अध्याय में तन्त्र मार्ग या कौलाचार के संबंधित शैव सिद्धान्त का उल्लेख किया है।[१४]

१४. काव्यमीमांसा, पृ० ९३

कौलाचार के अतिरिक्त "श्रीविद्या" के उपासकों का एक अन्य ही आचार है, जो समयाचार के नाम से विख्यात है। "समयविद्या" से राजशेखर का मन्तव्य इन्हीं सम्प्रदायों से है। अभी भी शैवसिद्धान्त का प्रचार दक्षिण भारत के तमिल प्रदेश में हैं। इस प्रदेश में शिव-सम्बन्धी अनेक स्तोत्रों तथा सिद्धान्त प्रतिपादक ग्रन्थों की रचनायें हुई हैं। इनकी भाषा तमिल है। ये ग्रंथ श्रुति के समान आदरणीय समझें जाते हैं। इस सिद्धान्त की मान्यता है कि भगवान् शंकर ने अपने भक्तों के उद्धार के लिए अपने पांचो मुखों से २८ तन्त्रों का आविर्भाव किया है।[१५]

१५. भारतीय दर्शन (उपाध्याय), पृ० ५७३

# प्रतिभोत्पत्तिप्रक्रिया

—रामजीपाण्डेयः

विधिनियोग-भावनानामन्यतमस्यैव वाक्यार्थत्वेन मीमांसादर्शने प्रतिभापदार्थ-विशेषेणोपपादित एवेति नाम विवादः परन्तु तेषां विधि-नियोगभावनानां पक्षाणां मध्ये प्रतिभारूपस्य वाक्यार्थत्वपक्ष एव वर्णनीय-त्वेनाभिमतः, तस्मादिह प्रतिभापदार्थस्सम्यग्रूपेण विमर्ष्टुमर्हः। तथा च शाब्दिकसिद्धान्ते व्याकरणदर्शने प्रतिभाया एव वाक्यार्थत्वं सिद्धान्तितमेव यथोक्तं भगवता भर्तृहरिणा वाक्यपदीये द्वितीये काण्डे २/१४४, कारि-कायां-विच्छेदग्रहणेऽन्येषां प्रतिभाऽन्यैव जायते

**वाक्यार्थं इति तामाहुः पदार्थैरुपपादिताम् ॥**

अर्थात् पृथग्भूतेभ्यो विच्छिन्नेभ्यो देवदत्तादिपदेभ्यस्तदर्थानां भिन्नत्वे पार्थक्येनैव ग्रहणं भवति। ततः परमेव शाब्दबोधावसरे प्रथमं पदार्थविषयकबुद्धिभिन्ना या काचिदेका प्रतिभा समुत्पद्यते तामेव वैयाकरणा वाक्यार्थं वर्णयन्ति, सा हि प्रतिभाऽसत्यैरेव पदार्थैरभिव्यक्ता व्याकरणसिद्धान्तख्यापनपरैराचार्यैर्मन्यते तस्या निरूपणं प्रतिपादनं वेदं तदिति रूपेणान्यं प्रति निरूपयितुन्न शक्या यतस्सा प्रतिभोपजायमाना केवलस्वसंवेदनसिद्धैवाऽसौ संस्तुता सती वैशिष्ट्यमावहति विविधाभिनव-नवोन्मेषशालिनी बुद्धिरूपाऽभिचर्चिता भवति। अत एवात्र भर्तृहरिर-प्याह—

**इदं तदिति साऽन्येषामनाख्येया कथञ्चन।**
**प्रत्यात्मवृत्तिसिद्धा सा कर्मापि न निरूप्यते ॥** वा २।१४६

तेन हि सा "असृष्टानामर्थानामुपश्लेषं मेलनं सम्पादयति"

इति वा २।१४७

"उपश्लेषमिवार्थानां सा करोत्यविचारिता" इति प्रोक्ता वाक्यपदीय-कारेण । अतस्सा संस्कारविशेषरूपभावसहकृतेन शब्दसचिवेनोत्पन्ना भवतीति निष्कर्षः । वस्तुतः कोऽपि मनीषी कर्तव्यताविषयेऽपि नैनामति-क्रमितुं पारयति कथञ्चन यतस्सर्वाऽपीतिकर्तव्यता तदधीनैव-प्रतिभा-जन्यैवाभ्युपगता भवति ।

भा दीप्ति विचक्षणविलक्षणात्मिकां धियम्प्रतिप्रतिपन्नेति संज्ञाऽन्व-थताम्भजति । निखिलोऽपि लोकः स्वां स्वां प्रमाणतयाऽभ्युपगच्छत्येव । अत एव कविकुलगुरुकालिदासोऽपि व्याहरति यत् –

**"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः"**

इति । अ० शा० । अं० १ श्लो० १९

एतेन न केवलम्मानवेषु तत्स्थितिः प्राशस्त्यं भजत्यपितु निसर्गतः पशुपक्षिणामपि जन्मान्तरीयसंस्कारजन्या जन्मकालादेव स्वस्वजात्युचिताः सर्वे समारम्भाः स्वस्वप्रतिभावशादेव जायमाना प्रतीतिपथमवतरन्तो दृश्यन्त एव यथा वसन्ततौ पुंस्कोकिलस्य पञ्चमस्वगावः, शिक्षारूपप्रयत्न-निरपेक्षो विद्यत एव तेनात्रास्या अपूर्वता प्रतिभायाः स्वारस्यभिचकास्ति सुतराम् ।

अपि च लूताजन्तूनां कृमिविशेषाणां लालातन्तुभिरेव कुलायरचना जन्मान्तरीयसंस्कारहेतुकप्रतिभाबलादेव विशिष्टशिक्षासापेक्षविनिर्मितां वसतिं निवासस्थानमपकृष्टतान्नयत्येव । एवमेव मूषकभक्षणे मार्जारस्य, स्वाभिक्तिः शुनो मिथो द्वेषक्रियायामहिनकुलयोरश्वमहिषयोः काकोलूकयोः तत्तदाचरणन्नैवशिक्षाभ्याससापेक्षं भवतीति कृत्वा प्रतिभा काचन सांसर्गिकी प्रथिता दृष्टिपथायते । एवं जले प्लवनक्रियायां गोमहिष्यादि-समग्रपशूनां प्रतिभामन्तरा कः प्रयोक्ता स्वीक्रियताम् ? तेन प्रतिप्राण्या-

हारादिक्रिया सर्वाऽपि प्रतिभामाहात्म्येनैव लोके ख्यातिं गता मन्यते नाम विवादावसरः कश्चन।

तादृश्याः प्रतिभाया उद्बोधने शब्द एव हेतुतां भजति, स च शब्दो विविधः पदरूपो, वाक्यरूपो, ध्वन्यात्मको वर्णात्मको वा सर्वोऽपि शब्दो बालानां तिरश्चाञ्चाविदितसंकेतानां किमुत गृहीतसंकेतानां विबुधानामपि यथार्थंप्रतिपादनपूर्वकं सकललोकप्रवृत्तिनिवृत्त्युपकारकव्यवहारे प्रयुज्यमानानां तत्तच्छब्दानां तत्तदर्थानाञ्च ग्रहाभ्यासजनितसंस्कारेण गुरुदेवादिप्रसादकृतसंस्कारेण जन्मान्तरीयार्जितसत्संस्कारेण चेष्टप्रतिभां जनयति।

यथा करतालिकादिशब्देन काकादिपक्षिणां पलायनं घण्टाशब्देन च छात्राणामध्यापकानाञ्चाध्ययनाऽध्यापनयोः प्रवृत्तिः। तत्र ध्वन्यात्मशब्दस्यैव हेतुत्वं वर्तते एवं जडानां, प्राणिनामपि गवादिमहिषादीनां स्वाभिप्रायमुररीकरणार्थं नियत एव कश्चन शब्द उच्चार्यते तत्तत्स्वामिभिः। तस्मादेव स्वस्वजात्यनुसारिणी नियता काचन प्रतिभा उद्बोध्यत इति प्रतिभाहेतुक एव सर्वोऽपि प्रवृत्तिनिवृत्त्यन्यतरो व्यवहारः प्रवर्तत एव। अस्यापि प्रमाणं भर्तृहरिवचनमेव यथा

**अभ्यासात् प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः।**
**बालानां च तिरश्चाञ्च यथार्थप्रतिपादने।** —वा.प. २।११९

अस्याः कारिकाया व्याख्यानं तत्त्वसंग्रहे ग्रन्थे आचार्यश्रीकमलशीलेनेत्थं कृतं यत् "शब्दस्य क्वचिद् विषये पुनः पुनः प्रवृत्तिदर्शनमभ्यासः, नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभेति" सा प्रयोगदर्शनावृत्तिसहितेन शब्देन जन्यते। प्रतिवाक्यं प्रतिपुरुषं च सा भिद्यते। स तु तस्या अपरिणामो भेदः शब्दव्यवहारस्यानन्त्यान्न शक्यतेऽभिधातुमित्यत आह बालानां तिरश्चाञ्चेत्यादि।

अतो यथा ह्यङ्कुशाभिघातादयो गजादीनामर्थप्रतिपत्तौ क्रियमाणा या प्रतिभाहेतवो भवन्ति तथैव सर्वेऽर्थवत्सम्मता वृक्षादयः शब्दा यथा-

भ्यासं प्रतिभामात्रोपसंहारहेतवो भवन्ति न त्वर्थं साक्षात् प्रतिपादयन्ति। अन्यथा कथं परस्परपराहतः प्रपञ्चनभेदानुत्पाद्य कथाप्रबन्धाश्च स्वविकल्पोपरचित-पदार्थ-भेदद्योतकाः स्युरिति।

पद्यमिदं न्यायकर्णिकायां विधिविवेके श्रीवाचस्पतिमिश्रैरित्थं व्याख्यातम् "अभ्यासजनितां भावनामभ्यासशब्देनाह कार्ये कारणोपचारात्। नाभिधाधीनोऽर्थबोधः शब्दादपित्वभ्यासाधीनः। यथा हि खलु कशाङ्कुशाभिघातादयोऽनभिधायका अपि वाजिगजादीनामभ्यासात् स्वतः प्रवृत्तिनिवृत्तिहेतुमर्थप्रतिभासां प्रतिभां भावयन्तः प्रवर्तकानिवर्तकाश्चेति।

अत एतदनुसारमपि संक्षेपतः सर्वः शब्दो व्युत्पन्नामव्युत्पन्नानाञ्चेह जन्मनि हेतुरेव तस्याः। अयञ्च प्रागभावीयोऽभ्यासोऽवश्यमभ्युपेय इत्यत्र दृष्टान्तमाह बालानां तिरश्चाञ्च यथार्थप्रतिपादने। अर्थभासप्रतिभोत्पादनेन चार्थप्रतिपादनयुक्तमत्र पद्ये वाक्यपदीये। उक्तदृशा संकलनया वक्तुं शक्यते यदभ्यासजनितया भावनया सहकृतः शब्दः प्रतिभाया उद्‌बोधने हेतुरिति, तेनात्रत्यविचारेण प्रतिभाया हेतुभ्यासः। अत्रविषये नागोजिभट्टस्य वैयाकरणलघुमञ्जूषायां संकेतं विनैव बालानां तिरश्चाञ्च मातुः स्तनपानादौ शावकरक्षणादिप्रवृत्तौ च प्रक्रियापि प्रमाणीभूता दृश्यते तत्रापि तन्मतानुसारमभ्यासादिनामपेक्षया संस्कारविशेषप्रतिभैव प्रतिफलति। अतो बालानां तिरश्चाञ्च प्रतिभाहेतुरभ्यासोऽपि नोपेक्ष्यः पूर्वजन्मभवः, शास्त्राभ्यासशिक्षादिजन्यस्तु यूनां स्थविराणाञ्चापि प्रशस्तः। अयञ्चाभ्यासः संकेतरूपः समय इष्यते कैश्चिदाचार्यैः। स चाभ्यासोऽस्मादनन्तरमिदं कार्यमित्युपदर्शनरूपा या प्रतिभा तद्धेतुस्वभावः। यथा प्रबलतरशिक्षाभ्यासाद् गजाङ्कुशादिताडनेन द्रुतगामिनो भवन्ति। कशाभिघातमात्रसमनन्तरमेवाश्वा शीघ्रं धावन्ति। एवमेवान्येऽपि प्राणिनो यथास्वभावमनादिवासनावशादवस्वीयप्रतिभया स्वजात्युचितं व्यवहारं कुर्वाणा अनुभूयन्त एव। "अनामश्च सोऽभ्यासः समयः कैश्चिदिष्यते" इति वाक्यपदीये प्रोक्तम्। व. प. १२।१२०

**प्रतिभाया भेदाः**

१. प्रतिभा कारणभेदेन षड्विधा प्रकीर्तिताः

१. प्रथमा स्वभावजन्या, यथा कपीनां शाखाप्लवनादिषु, यथावाऽपरस्याः प्रकृतेरव्यक्तस्वरूपायाः प्रथमं सत्तामात्रस्वरूपं महान्तमात्मानं प्रत्यानुगुण्यम्। स्वभावेनैव हि परस्याः प्रकृतेः महदाकारेण परिणामानुगुण्यम्। स्वभावेनैव हि परस्याः प्रकृतेः महदाकारेण परिणामानुगुण्यम्। सुषप्तावस्थस्येव पुरुषस्य प्रवोधानुगुण्यम्। निद्राया अपि तमः परिणामरूपायाः परमानन्दफलसत्तामात्रप्रत्यानुगुण्यम्। सर्वमेतत्प्रतिभैव बोध्यं भवति तेन प्रतिभा स्वभावाऽपरपर्यायापि भवति।

२. द्वितीया सदाचारहेतुका भवति प्रतिमा। सदाचारश्च द्विविधो भवति।

(क) शास्त्रविहिततपश्चरणं स्वाध्यायादिकं वा यथा सदाचारेणैव भूतभविष्यद्वर्तमानविषयकप्रकाशविशेषाणां वशिप्ठादिमहर्षिणां प्रतिभा।

३. तृतीया अभ्यासहेतुका प्रायः प्रोक्तापि। अथ च यथा कूपादि खानकानां कूपतडागादिखननाभ्यासनिमित्तिका प्रतिभा, ते हि सत्यमभ्यासेनैव भूमिस्था जलनाडीः परिज्ञाय कूपं खनन्ति सत्वरं लब्धजलाश्चकृतकृत्या भवन्ति।

४. चतुर्थी योगहेतुका प्रतिभा यथा योगिनां परकीयाभिप्रायज्ञानादिषु भवति।

५. अदृष्टहेतुका पञ्चमी प्रतिभा भवति यथा रक्षसां पिशाचानां पितृणाञ्च शरीरप्रवेशान्तर्ध्यानादिषु क्रियासु सुप्रतिष्ठितैव।

६. षष्ठी तु तयोर्योगादिसिद्धिशालिनां तत्कालमेवोपस्थिता उपस्थापिता वा प्रतिभा मन्यते। यथा महाभारतयुद्धसमये बहुदेशिव्यापियुद्धवृत्तस्य सम्यग्ज्ञानाय वेदव्यासमुनिनोपहिता सञ्जयादीनां प्रतिभा।

इत्थमुक्तविधया प्रतिपादिताः प्रतिभाः षड्धा आगमिकवाक्याभिव्यङ्ग्यास्तन्मूलकलौकिकवाक्यप्रतिपाद्याश्चापि स्वीकृता विभिन्नैः

शास्त्रकारैः स्वस्वसिद्धान्तनिष्णातैर्यथायथं स्वस्वशास्त्रसिद्धान्ते सर्वा अपि गतार्थास्ताभिरेव मन्यन्ते। इमा भेदा भर्तृहरिणापि सुप्रतिपादिता एव। तस्मादिहानागमश्च सोऽभ्यास इत्यादयो विशेषत उक्ता एव भर्तृहरिमतानुसारमपि तस्यार्थस्त्वागम्यते=प्राप्यते इत्यागमः कारणम्। अविद्यमान आगमो यस्मिन्नसावनागमोऽनादिरित्यर्थोऽपि समयः संकेतः कैश्चिदिष्यते, यथा नैयायिकादयः शब्दार्थसम्बन्धः समय ईश्वरकृतः इत्याचक्षते। स चाभ्यासस्य भावना विषयः इति कृत्वाऽभ्यास उच्यते।

**एवमत्र कार्यता ज्ञानस्यापि प्रतिभारूपता वक्तुं शक्यते**

तस्मादनन्तरमिति निमित्तस्य निर्देशः। इदमिति कार्यमिति तु स्वरूपनिर्देशः। तत्र स्वभावादिभिर्हेतुभिर्विभागेन पदार्थानामुपस्थितौ सत्यामनन्तरं विशिष्टार्थविषयकं कार्यताज्ञानं यज्जायते तदेव प्रतिभापदवीं भजति प्रतिभारूपं वा। अत्रापि भर्तृहरिणा प्रोक्तं यथा

**अनन्तरमिदं कार्यमस्मादित्युपदर्शनम्।**
**उपश्लोकमिवार्थानां सा करोत्यविचारिता।**

इति वा० प० २।१४५

इयं हि कार्यता ज्ञानात्मिका प्रतिभा सर्वेषां प्रवृत्तिनिवृत्तिरूपाणां व्यवहाराणां जनयित्रीति निश्चयः। प्रतिभैषा यथा कार्यपरकवाक्यस्य प्रयोगे जायते तथा सिद्धार्थपरवाक्यस्य प्रयोगेऽपि। एतानेवाखिलो भेदः प्रथमस्थले प्रतिभावाक्यार्थं इत्यवधानेन प्रतीयते तत्र कार्यबोधकलिङ्गादिप्रत्ययानां प्रयोगात्। द्वितीये स्थले तु कार्यताबोधकपदस्याध्याहारेण प्रतिभा या वाक्यार्थत्वं यथोपनिषत्सु सच्चिदानन्दाद्वयं ब्रह्मेति बोधे जाते कर्मणां तत्फलानां तत्साधनानाञ्चासत्त्वम्, कर्मसु प्रवृत्ते वैफल्यम्। तादृशब्रह्मबोधे जाते तस्याः प्रतिबन्धकत्वञ्चं प्रतीयते। "इति सर्वोपरमविषयकः संकल्पः कर्तव्यः" इति प्रतिभा तत्तत्पदानामध्याहारेणाभिजायते। वाक्यार्थज्ञानमूलकतया तत्र वाक्यार्थव्यवहारो भवति। अतएव यत्परः शब्दः स वाक्यार्थं एव इति शिष्टानामुक्तिः संगच्छते। अयमेव संकल्पो

विविदिषा सन्न्यास शब्देन व्यवह्रियते सर्वकर्मसंन्यासकारणत्वात्। एवं विधिस्थलवन्निषेधस्थलेऽपि सर्वत्र प्रवृत्त्यौदासीन्यरूपनिवृत्तिविषयकसंकल्पस्यैव कार्यत्वं नोच्चरेदसंस्कृतां गिरमित्यादौ स्वीकारात्।

अत उक्तविशेष्यत्वरूपो वाक्यार्थः प्रतिभामात्रविषयत्वात् प्रतिभापदव्यवहार्य्य एव तेन प्रतिभारूपो वाक्यार्थ इत्युक्तिः सुसंगच्छते। अतो घटादयोऽर्थाश्चक्षुरादिविषयाः सन्तः सामान्यबुद्धिविषया भवन्ति परन्तूक्तान्वयरूपो वाक्यार्थः प्रतिभारत्यबुद्धिविशेषस्यैव विषयो नान्यस्येति महान् विशेषः।

# युगप्रवाचकः स्वामी विवेकानन्द

—प्रसन्न कुमारी

युगप्रवाचकस्य श्रीरामकृष्णपरमहंसस्य [२८३६-२८८६] शिष्येषु अग्रगण्यो भवति स्वामी विवेकानन्दः। तस्य पिता विश्वनाथः, माता भुवनेश्वरीदेवी चासीत्। त्रिषष्ट्यधिकाष्टादशसहस्रतमे [२८६३] वर्षे कलकत्तादेशे स अजायत। तस्य जन्मना एकस्य कालघट्टस्य अन्त्यं एक नूतनकालस्यारम्भः च अभूत्। अतः स्वामी विवेकानन्दः युगप्रवाचकरूपेण आद्रियते।

अस्मिन् लोके यदा यदा धर्मस्य ग्लानिर्भवति अधर्मस्य च अभ्युत्थानं, तदा तदा स स्वां प्रकृतिमवष्टभ्य लोकेऽवतीर्थ दुष्टान् विनाशयित्वा साधून् परित्रायत इति गीतावचनं प्रसिद्धमेव—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे' ॥[1]

एवं धर्मसंस्थापनार्थाय त्रेतायां द्वापरे च यः श्रीरामरूपेण श्रीकृष्णरूपेण अवतीर्णवान्, स एव कलौ श्रीरामकृष्णरूपेण स्वामी विवेकानन्दरूपेण च अवततार। आधुनिक भारतीयदेशीयत्वस्य पिता स्वामी विवेकानन्द एव इति डा० प्रधान् महाशयस्याभिप्रायः।

कर्मयोगिनः स्वामिवर्येण ज्ञानकर्मभक्त्दियोगानां समन्वय कृतः। तेन सर्वेऽपि धर्माः सत्याः तेषां सर्वेषां सारभूतं तत्त्वमेकमेवेति समुद्घुष्टम्। सः तस्य प्राच्य ओ पाश्चात्य नामक ग्रन्थे एवमुक्तम्-हिन्दु ब्रूते

---

१. भगवद्गीता, IV ७, ८

यद् राजनीतिकी सामाजिकी च स्वतन्वता सम्यगेव परं यद् मूलं तत्त्वं तद्धि पारमार्थिकी स्वतन्त्रता-मुक्तिः इति। एतदेव जातीयजीवनस्योद्देश्यम्। वैदिको भवतु जैनो वा वौद्धो वा, अद्वैतवादी, विशिष्टाद्वैतवादी, द्वैतवादी वा यः कोऽपि भवतु, सर्वेषां तत्रैकमत्यम्। तव हस्तं न प्रयच्छ, तथा सति सर्वनाशः, तद् त्यक्तवा यत् किमपि क्रियताम्, तूष्णीम् उपविशामः' इति। एवं वसुधैव कुटुम्बकम् इति तस्याशयः। "कर्मण्येवाधिकारस्ते मा-फलेषु कदाचन[२] इति गीतासन्देशः स्वामिना अप्युपदिष्टः। एवं विवेकानन्दः अक्षरशः कर्मयोगी आसीत्।

जातिधर्मानाचारेभ्यः अन्धविश्वासेभ्यश्च भारतीयानामुन्नमनं स्वामिना कृतम्। भारतीयानां सर्वेष्वपि जीवितरङ्गेषु नवोत्थानस्य बीजावापः तेन कृतः। स्वामिनमधिकृत्य टागोर महाशयस्य अभिप्रायोऽन्वर्थं एव—'यदि भारतं ज्ञातुमिच्छथ तर्हि विवेकानन्दसाहित्यं पठथ। तव विद्यमानं सर्वं साधकमस्ति, न किमपि निषेधकम्' इति।

दरिद्राणामवशानां च जनानामुद्धरणार्थं समर्पितमासीत् स्वामिनः जीवितम्। दरिद्रजनानाम् उद्धरणं विना तत्त्वचिन्ताप्रभाषणं पापम् 'इत्येवं तस्याशयः। त्यागवादी सः 'मूर्खदेवो भव, दरिद्रदेवो भव' इति सिद्धान्तः प्रचलितः। एवं दरिद्रनारयणादि जनसेव एव ईश्वरसेव इति तस्याभिप्रायः।

उत्तिष्ठत जाग्रत प्राप्यवरान्निबोधत! इति शंखनादेन ऊर्ज्वस्वलान् चकार विवेकानन्दः। तेनः एवमप्युक्तम्—'न गृहं गृहमित्याहुः गृहिणी गृहमित्युच्यत इति। अतः स्वामी विवेकानन्दः न केवलं तत्त्वचिन्तको अद्वैतमतप्रवाचको वा भवति। तस्य व्यक्तित्वं बहुमुखमासीत्। तस्य अमृतवाणी सर्वमपि मानवराशिं हठादाचकर्ष। स्वामी विवेकानन्दस्य लेखनानि प्रभाषणानि च नित्यनूतनानि एव, तेषां प्रसक्तिः कदापि न नश्यति' इति नेहुमहोदयेन उक्तम्।

२. भगवद्गीता, II ४७

विवेकानन्दस्य सतीर्थ्येनि श्रीरामकृष्णानन्दस्वामिना एवमुक्तम्—'यथा सूर्यः तमो निहननं क्रियते यथा च विष्णुः दुष्टजनान् छिनत्ति तथैव तस्य विवेकानन्दस्य अखिल नेत्रलोमं जगन्मोहकं रूपं वीक्षणादेव वीक्षकानाम् आध्यात्मिकादि तापत्रयान्मोचयति इति—

सूर्यो यथान्धं हि तमो निहन्ति
विष्णुर्यथा दुष्ठजनान् छिनत्ति ।
तथैव यस्याखिलनेत्रलोभं
रूपं त्रितापं विमुखीकरेति"[3] इति ।

एतेन तस्य जगद्गुरुत्वसूचितं सिद्धयति । देशिकेन्द्र[4] इत्यपि सः सूच्यते । देशिकेन्द्र इत्यस्य परमपुरुनार्थं तत्प्राप्त्युत्पाथं च दिशतीति देशिकः गुरुः देशिकानां इन्द्रः देशिकेन्द्रः गुरुश्रेष्ठः इत्यर्थो अन्वर्थं एव । साधारण-गुरुस्तु केवलं मार्गमेव दिशति न तु मार्गक्रमणाय शक्तिप्रदानं करोति । श्रीरामकृष्णशारदादेवीविवेकानन्दादयस्तु शक्तिप्रदानेन सह परमात्मा-नुभूर्ति चापि दार्तु समर्थाः भवन्ति ।

आत्मनो मोक्षार्थं जगद्धिताय च इत्येव तस्यादर्शः । एवं स्वामी विवेकानन्दः जगत् सत्यमेव इत्यङ्गीक्रियते । शङ्कराचार्यस्य दर्शनं तु जगतु मिध्या एव । तेषां मते आत्मज्ञानानन्तरं जगन्मिथ्यैक । ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः इति । किन्तु स्वामीविवेकानन्दस्य मते जगत् न मिथ्या जगत् सत्यमेव । जीवस्य भौतिकात्मीययोः प्रगत्योः आवश्यकता तेन उक्ता । भौतिकोन्नयनं विना जनानामुद्धरणं कर्तु नैव शक्यते इत्येव तस्याभिप्रायः । अत एवोक्तं श्रीमद्रामकृष्णानन्दस्वामिनः—

हिताय नृणां नरमूर्तिमन्तम् ।
विवेक आनन्दमहं नमामि'[5] इति ।

---

३. विवेकानन्दपञ्चकम्, श्लो ४

४. 'तं देशिकेन्द्रं परमं पवित्रम् ।
विश्वस्य पालं मधुरं यतीन्द्रम् ।' विवेकानन्दपञ्चकम्...श्लो० ५

५. 'विवेकानन्दपञ्चकम्'—श्लो० ५

एते आत्ममोक्षजगद्धिते एव मानवानां हिताय भवत इति निश्चित्य तत्प्रदर्शनाय नरमूर्तिमन्तं सप्तर्षिमण्डलात् नररूपेण अवतीर्णम्। विवेके आनन्दमनुभूतवन्तं अथवा विवेकद्वारा आत्मानन्दं प्राप्तवन्तं जीवकोय्यन्तर्गतः अहं जीवत्वमुत्तीर्थं शिवत्वप्राप्तये नमामि इति तस्याशयः। एवं स्वामी विवेकानन्दः दुष्टानां दोषनाशकत्वेन सुजनीकरणं सुजनानां च अध्यात्मविद्यादानेन मोक्षद्वारापावरणं च क्रियते।

स्वामी विवेकानन्दः त्यागभूयिष्ठेण कर्म प्रवणेन ह्रस्वेन च स्वजीवितेन समेषां लोकानां भक्त्यादरयोः पात्रीभूतो भवति। एवं स्वामिनः धन्यजीवितं पवित्रात् पवित्रतरं कृतकृत्यं च भवति। स्वामिनमधिकृत्य सुप्रसिद्ध चिन्तकस्य शेमैन्शेलन्टमहाशयस्यानुस्मरणमिदम्—'तत्रभवतो वाङ्मयं महितसंगीतं भवति विथोमहाशयस्येव पदपंक्तथः, हान्डकस्थ वृन्दगानानां चरणानुसन्धानम्, हृदयद्रवीकरणक्षमः ताललयः शरीरे विद्युत्प्रवाहसदृशं रोमाञ्चं विना तद्वचांसि स्प्रष्टुमहमशक्तो भवामि' इति। एनं पुण्यदेशेण जातानां पौराणिकाध्यात्मिकपुरुषाणां अन्तस्सत्ताम् आवहन् विवेकानन्दः तथा प्रभावितः सर्वेषां समादरणीयो बभूव॥

# संस्कृतकाव्यशास्त्र में रसवत् अलंकार

—डॉ. राजेन्द्र मिश्र

ऋग्वेद में अरङ्कृति शब्द के प्रयोग,[1] उपमा[2]-उत्प्रेक्षादि के नामोल्लेख-विहीन संविधानक तथा यास्क एवं पाणिनि[3] द्वारा औपम्यविद्या की सुस्पष्ट व्याख्या के अनन्तर अलंकारों का युक्ति-युक्त विवेचन सर्वप्रथम हम आचार्य भरत (ई० पू० चौथी शती) प्रणीत नाट्यशास्त्र में पाते हैं। भरत ने मात्र चार अलंकारों—उपमा, रूपक, दीपक एवं यमक—की सोदाहरण व्याख्या की है।

भरत के अनन्तर आचार्य भामह (छठी शती ई०) ने काव्यालंकार में यह कहते हुए कि 'मेरे पूर्ववर्तियों ने पाँच ही अलंकारों का व्याख्यान किया है'[4] कुल ३८ अलंकारों (दो शब्दालंकार तथा ३६ अर्थालंकार) का

---

१. यमाय सोमं सुनुत यमाय जुहुता हविः।
यमं ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः॥

—ऋग्वेद, १०.१४.१३ (यमसूक्त)

भूम्यां देवेभ्यो ददति यज्ञं हव्यमरङ्कृतम्।

—अथर्व० पृथ्वीसूक्त १९

२. सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्।

—ऋग्वेद १.११५.२ (सूर्यसूक्त)

३. उपमेति गार्ग्यः (निरुक्त)
उपमानानि सामान्यवचनैः २.१.५५
उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। २.१.५६

—अष्टाध्यायी

४. अनुप्रासः सयमको रूपकं दीपकोपमे।
इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः॥

—काव्यालंकार २.४

विवरण प्रस्तुत किया। भामह द्वारा उदाहृत पूर्ववर्ती पाँच अलंकारों में चार अलंकार तो भरत-प्रोक्त हैं। पाँचवाँ अलंकार 'अनुप्रास' सम्भवतः आचार्य मेधावित् अथवा मेधाविरुद्र ने आविष्कृत किया, जिनका अनेकशः उल्लेख भामह ने किया है।

काव्यालंकार के तृतीय परिच्छेद में व्याख्यात २३ अलंकारों में दूसरा स्थान रसवत् अलंकार का है। आचार्य भामह इसे प्रेयस् तथा ऊर्जस्वि के मध्यस्थ-रूप में उपन्यस्त करते हैं। परन्तु उन्होंने इन तीनो ही अलंकारों का लक्षण न देकर, सीधे उदाहरण ही दे दिया है। आचार्य के ही शब्दों में,

प्रेयो गृहागतं कृष्णमवादीद् विदुरो यथा।
अद्य या मम गोविन्द ! जाता त्वयि गृहागते।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ॥

रसवद्दर्शितस्पष्टशृङ्गारादिरसं यथा।
देवी समागमद्धर्ममस्करिण्यतिरोहिता ॥

ऊर्जस्वि कर्णेन यथा पार्थाय पुनरागतः।
द्विः सन्दधाति किं कर्णः शल्येत्यहिरपाकृतः ॥

इन व्याख्यानों के आधार पर यह कहा जा सकता है कि भामह की दृष्टि में अतिशय प्रिय वचन, अतिशय रस-समन्वय तथा गर्वोक्ति ही क्रमशः प्रेयस्, रसवत् एवं ऊर्जस्वि अलंकार हैं। जिसमें शृङ्गारादि रस स्पष्टता से दिखाए गये हों वही रसवत् अलंकार है। इसका उदाहरण देते हैं भामह—

'देवी समागमद्धर्ममस्करिण्यतिरोहिता'

अर्थात् 'धर्ममस्करिणी देवी प्रकट रूप में उपस्थित हुई' भामह द्वारा उपस्थापित इस उदाहरण का मूलसन्दर्भ सुस्पष्ट नहीं है। टीकाकार ताताचार्य के मतानुसार यह सन्दर्भ कुमारसम्भव महाकाव्य का है।

